कथयत्यप्रशस्तानि चिन्तयत्यथवा पुनः ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ ११ ॥
मृतदग्धविनष्टानि भजति व्याहरत्यपि ।
अप्रशस्तानि चान्यानि वैद्ये दूता मुमूर्षताम् ॥ १२ ॥
विकारसामान्यगुणे देशकालेऽथवा भिषक् ।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १३ ॥
दीनभीतद्रुतत्रस्तां मलिनामसतीं स्त्रियम् ।
त्रीन्व्याकृतांश्च पण्डांश्च दूतान्विद्यान्मुमूर्षताम् ॥ १४ ॥
अङ्गव्यसनिनं दूतं लिङ्गिनं व्याधितं तथा ।
संप्रेक्ष्य चोग्रकर्माणं न वैद्यो गन्तुमर्हति ॥ १५ ॥
आतुरार्थमनुप्राप्तं खरोष्ट्रमथ वाहनम् ।
दूतं दृष्ट्वा भिषग्विद्यादातुरस्य पराभवम् ॥ १६ ॥
पलालतुषमांसास्थिकेशलोमनखद्विजान् ।
मार्जनीं मुसलं सूर्पमुपानद्भग्नविच्युते ॥ १७ ॥
तृणकाष्ठतुषाङ्गारं स्पृशन्तो लोष्ट्रभस्म च ।
तत्पूर्वदर्शने दूता व्याहरन्ति मुमूर्षताम् ॥ १८ ॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।
पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ १९ ॥
यथा व्यसनिनं प्रेतं प्रेतालङ्कारमेव वा ।
भिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ २० ॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ।
स्पर्शो वा विपुलः क्रूरो यद्वान्यदशुभं भवेत् ॥ २१ ॥
तत्पूर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः ।
दूतानां व्याहृतं श्रुत्वा धीरो मरणमादिशेत् ॥ २२ ॥
इति दूताधिकारोऽयमुक्तः कृत्स्नो मुमूर्षताम् ।
पथ्यातुरकुलानां च वक्ष्याम्यौत्पातिकं पुनः ॥ २३ ॥
अवक्षुतमथोत्क्रुष्टं स्खलनं पतनं तथा ।
आक्रोशः संप्रहारो वा प्रतिषेधो विगर्हणम् ॥ २४ ॥

वस्त्रोष्णीषोत्तरासङ्गश्छत्रोपानद्युगाश्रयम् ।
व्यसनं दर्शनं चापि मृतव्यसनिनं तथा ॥ २५ ॥
चैत्यध्वजपताकानां चूर्णानां पतनानि च ।
हतानिष्टप्रवादाश्च दर्शनं भस्मपांसुभिः ॥ २६ ॥
पथश्छेदो बिडालेन शुना सर्पेण वा पुनः ।
मृगद्विजानां क्रूराणां गिरो दीप्तां दिशं प्रति ॥ २७ ॥
शयनासनयानानामुत्तानानां प्रदर्शनम् ।
इत्येतान्यप्रशस्तानि सर्वाण्याहुर्मनीषिणः ॥ २८ ॥
एतानि पथि वैद्येन पश्यतातुरवर्त्मनि ।
शृण्वता च न गन्तव्यं तदागारं विपश्चिता ॥ २९ ॥
इत्यौत्पातिकमाख्यातं पथि वैद्यविगर्हितम् ।
इमामपि च बुध्येत गृहावस्थां मुमूर्षताम् ॥ ३० ॥
प्रवेशे पूर्णकुम्भाग्निमृद्बीजफलसर्पिषाम् ।
वृषब्राह्मणरत्नानां देवतानां विनिर्गतिम् ॥ ३१ ॥
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ।
भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति ॥ ३२ ॥
छिन्नभिन्नविदग्धानि भग्नानि मृदितानि च ।
दुर्बलानि च सेवन्ते मुमूर्षोर्वैश्मिका जनाः ॥ ३३ ॥
शयनं वसनं यानं गमनं भोजनं रुतम् ।
श्रूयतेऽमङ्गलं यस्य नास्ति तस्य चिकित्सितम् ॥ ३४ ॥
शयनं वसनं यानमन्यद्वापि परिच्छदम् ।
प्रेतवद्यस्य कुर्वन्ति सुहृदः प्रेत एव सः ॥ ३५ ॥
अन्नं व्यापद्यतेऽत्यर्थं ज्योतिश्चैवोपशाम्यति ।
निवाते सेन्धनं यस्य तस्य नास्ति चिकित्सितम् ॥ ३६ ॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ ३७ ॥

भवन्ति चात्र ।

यद्द्वादशभिरध्यायैर्व्यासतः परिकीर्तितम् ।
मुमूर्षतां मनुष्याणां लक्षणं जीवितान्तकृत् ॥ ३८ ॥

तत्समासेन वक्ष्यामि पर्यायान्तरमाश्रितम् ।
पर्यायवचनं ह्यर्थविज्ञानायोपपद्यते ॥ ३९ ॥
इत्यर्थं पुनरेवेयं विवक्षा नो विधीयते ।
तस्मिन्नेवाधिकरणे यत्पूर्वमभिदर्शितम् ॥ ४० ॥
वसतां चरमे काले शरीरेषु शरीरिणाम् ।
अत्युग्राणां विनाशाय देहेभ्यः प्रविवत्सताम् ॥ ४१ ॥
इष्टाँस्तितिक्षतां प्राणान्कान्तं वासं जिहासताम् ।
तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम् ॥ ४२ ॥
विनाशायेह रूपाणि यान्यवस्थान्तराणि च ।
भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमम् ॥ ४३ ॥
प्राणाः समुपतप्यन्ते विज्ञानमुपरुध्यते ।
वमन्ति बलमङ्गानि चेष्टा व्युपरमन्ति च ॥ ४४ ॥
इन्द्रियाणि विनश्यन्ति खिलीभूतेव चेतना ।
औत्सुक्यं भजते सत्त्वं चेतो भीराविशत्यपि ॥ ४५ ॥
स्मृतिस्त्यजति मेधा च ह्रीश्रियौ चापसर्पतः ।
उपप्लवन्ते पाप्मान ओजस्तेजश्च नश्यति ॥ ४६ ॥
शीलं व्यावर्ततेऽत्यर्थं भक्तिश्च परिसर्पते ।
विक्रियन्ते प्रतिच्छायाश्छायाश्च विकृतिं गताः ॥ ४७ ॥
शुक्रं प्रच्यवते स्थानादुन्मार्गं भजतेऽनिलः ।
क्षयं मांसानि गच्छन्ति गच्छत्यसृगुपक्षयम् ॥ ४८ ॥
ऊष्माणः प्रलयं यान्ति विश्लेषं यान्ति संधयः ।
गन्धा विकृततां यान्ति भेदं वर्णस्वरौ तथा ॥ ४९ ॥
वैरस्यं भजते कायः कायश्छिद्रं विशुध्यति ।
धूमः संजायते मूर्ध्नि दारुणाख्यश्च चूर्णकः ॥ ५० ॥
सततस्पन्दनादेशाः शरीरे येऽभिलक्षिताः ।
ते स्तम्भानुगताः सर्वे न चलन्ति कथंचन ॥ ५१ ॥
गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः ।
विपर्यासेन वर्तन्ते स्थानेष्वन्येषु तद्विधाः ॥ ५२ ॥
नखेषु जायते पुष्पं पङ्को दन्तेषु जायते ।

जटाः पक्ष्मसु जायन्ते सीमन्ताश्चापि मूर्धनि ॥ ५३ ॥
भेषजानि न संवृत्तिं प्राप्नुवन्ति तथा रुचिम् ।
यानि चाप्युपपद्यन्ते तेषां वीर्यं न सिध्यति ॥ ५४ ॥
नानाप्रकृतयः क्रूरा विकारा विविधौषधाः ॥ ५५ ॥
क्षिप्रं समभिवर्तन्ते प्रतिहत्य बलौजसी ।
शब्दः स्पर्शो रसो रूपं गन्धश्चेष्टा विचिन्तितम् ॥ ५६ ॥
उत्पद्यन्तेऽशुभान्येव प्रतिकर्मप्रवृत्तिषु ।
दृश्यन्ते दारुणाः स्वप्ना दौरात्म्यमुपजायते ॥ ५७ ॥
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ।
प्रकृतिर्हीयतेऽत्यर्थं विकृतिश्चाभिवर्धते ॥ ५८ ॥
कृत्स्नमौत्पातिकं घोरमरिष्टमुपलक्ष्यते ।
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ॥ ५९ ॥
लक्षणानि यथोद्देशं यान्युक्तानि यथागमम् ।
मरणायेह रूपाणि पश्यतापि भिषग्विदा ॥ ६० ॥
अपृष्टेन न वक्तव्यं मरणं प्रत्युपस्थितम् ।
पृष्टेनापि न वक्तव्यं तत्र यत्रोपघातकम् ॥ ६१ ॥
आतुरस्य भवेद्दुःखमथवान्यस्य कस्यचित् ।
अध्रुवं मरणं यस्य नैनमिच्छेच्चिकित्सितुम् ।
यस्य पश्येद्विनाशाय लिङ्गानि कुशलो भिषक् ॥ ६२ ॥
लिङ्गेभ्यो मरणाख्येभ्यो विपरीतानि पश्यता ।
लिङ्गान्यारोग्यमागन्तुं वक्तव्यं भिषजा ध्रुवम् ॥ ६३ ॥
दूतैरौत्पातिकैर्भावैः पथ्यातुरकुलाश्रयैः ।
आतुराचारशीलेष्टद्रव्यसंपत्तिलक्षणैः ॥ ६४ ॥
स्वाचारं हृष्टमव्यङ्गं यशस्यं शुक्लवाससम् ।
अमुण्डमजटं दूतं जातिवेशक्रियासमम् ॥ ६५ ॥
अनुष्ट्रखरयानस्थमसन्ध्यास्वग्रहेषु च ।
अदारुणेषु नक्षत्रेष्वनुग्रेषु ध्रुवेषु च ॥ ६६ ॥
विना चतुर्थीं नवमीं विना रिक्तां चतुर्दशीम् ।
मध्याह्नं चार्धरात्रं च भूकम्पं राहुदर्शनम् ॥ ६७ ॥

विना देशमशस्तं च शस्तौत्पातिकलक्षणम् ।
दूतं प्रशस्तमव्यग्रं निर्दिशेदागतं भिषक् ॥ ६८ ॥
दध्यक्षतद्विजातीनां वृषभाणां नृपस्य च ।
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च ॥ ६९ ॥
सुरध्वजपताकानां फलानां याचकस्य च ।
कन्यानां वर्धमानानां बद्धस्यैकपशोस्तथा ॥ ७० ॥
पृथिव्या उद्धृतायाश्च वह्नेः प्रज्वलितस्य च ।
मोदकानां सुमनसां शुक्लानां चन्दनस्य च ॥ ७१ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रियास्तथा ॥ ७२ ॥
जीवञ्जीवकसिद्धार्थसारसप्रियवादिनाम् ।
हंसानां शतपत्राणां चाषाणां शिखिनां तथा ॥ ७३ ॥
मत्स्याजद्विजशङ्खानां प्रियङ्गूनां घृतस्य च ।
रोचिष्कादर्शसिद्धानां रोचनायाश्च दर्शनम् ॥ ७४ ॥
गन्धः सुरभिवर्णश्च सुशुक्लो मधुरो रसः ।
मृगपक्षिमनुष्याणां प्रशस्ताश्च गिरः शुभाः ॥ ७५ ॥
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ।
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनाः ॥ ७६ ॥
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे तु विद्यादारोग्यलक्षणम् ॥ ७७ ॥
मङ्गलाचारसंपन्नः सातुरो वैश्मिको जनः ।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥ ७८ ॥
धनैश्वर्यसुखावाप्तिरिष्टलाभः सुखेन च ।
द्रव्याणां तत्र योग्यानां योजनां सिद्धिरेव च ॥ ७९ ॥
गृहप्रासादशैलानां नागानां वृषभस्य च ।
हयानां पुरुषाणां च स्वप्ने समधिरोहणम् ॥ ८० ॥
सोमार्काग्निद्विजातीनां गवां नृणां यशस्विनाम् ।
अर्णवानां प्रतरणं वृद्धिः संबाधनिःसृतिः ॥ ८१ ॥

स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ।
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ॥ ८२ ॥
मांसमत्स्यविषामेध्यच्छत्रादर्शपरिग्रहः ।
स्वप्ने सुमनसां चैव शुक्लानां दर्शनं शुभम् ॥ ८३ ॥
अश्वगोरथयानं च यानं पूर्वोत्तरेण च ।
रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥ ८४ ॥
सत्त्वलक्षणसंयोगा भक्तिर्वैद्यद्विजातिषु ।
साध्यत्वं न च निर्वेदस्तदारोग्यस्य लक्षणम् ॥ ८५ ॥
आरोग्याद्बलमायुश्च सुखं च लभते महत् ।
इष्टांश्चाप्यपरान्भावान्पुरुषः शुभलक्षणः ॥ ८६ ॥"

तत्र श्लोकः ।

उक्तं गोमयचूर्णीये मरणारोग्यलक्षणम् ।
दूतस्वप्नातुरोत्पातयुक्तिसिद्धिव्यपाश्रयम् ॥ ८७ ॥

भवति चात्र ।

इतीदमुक्तं प्रकृतं यथा तथा
तदन्ववेक्ष्यं सततं भिषग्विदा ।
तथा हि सिद्धं च यशश्च शाश्वतं
स सिद्धकर्मा लभते धनानि च ॥ ८८ ॥

इति चरकसंहितायामिन्द्रियस्थाने द्वादशोऽध्यायः ॥ १२ ॥

## इन्द्रियस्थानं सम्पूर्णम् ।

---

# चिकित्सितस्थानम् ।

## प्रथमोऽध्यायः ।

अथाभयामलकीयेऽध्याये रसायनपादं व्याख्यास्यामः ।

"चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥ १ ॥
विद्याद्भेषजनामानि भेषजं द्विविधं च तत् ।
स्वस्थस्यौजस्करं किंचित्किंचिदार्तस्य रोगनुत् ॥ २ ॥
अभेषजं च द्विविधं बाधनं सानुबाधनम् ।
स्वस्थस्यौजस्करं यत्तु तद्वृष्यं तद्रसायनम् ॥ ३ ॥
प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम् ।
प्रायःशब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत् ॥ ४ ॥
दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलं परम् ॥ ५ ॥
वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ ६ ॥
अपत्यसन्तानकरं यत्सद्यः संप्रहर्षणम् ।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः ॥ ७ ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
जीर्यतोऽप्यक्षयं शुक्रं फलवद्येन दृश्यते ॥ ८ ॥
प्रभूतशाखः शाखीव येन चैत्यो यथा महान् ।
भवत्यर्च्यो बहुमतः प्रजानां सुबहुप्रजः ॥ ९ ॥
सन्तानमूलं येनेह प्रेत्य चानन्त्यमश्नुते ।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत् ॥ १० ॥
स्वस्थस्यौजस्करं त्वेतद्द्विविधं प्रोक्तमौषधम् ।
यद्व्याधिनिर्घातकरं वक्ष्यते तच्चिकित्सिते ॥ ११ ॥

चिकित्सितार्थ एतावान्विकाराणां यदौषधम् ।
रसायनविधिश्चाग्रे वाजीकरणमेव च ॥ १२ ॥
अभेषजमिति ज्ञेयं विपरीतं यदौषधात् ।
तदसेव्यं निषेव्यं तु प्रवक्ष्यामि यदौषधम् ॥ १३ ॥
रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं चैव वातातपिकमेव च ॥ १४ ॥
कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते ।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम् ॥ १५ ॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे ।
दिशि पूर्वोत्तरस्यां तु सुभूमौ कारयेत्कुटीम् ॥ १६ ॥
विस्तारोत्सेधसंपन्नां त्रिगर्भां सूक्ष्मलोचनाम् ।
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम् ॥ १७ ॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम् ।
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम् ॥ १८ ॥
अथोदगयने शुक्ले तिथिनक्षत्रपूजिते ।
मुहूर्तकरणोपेते प्रशस्ते कृतवापनः ॥ १९ ॥
धृतिस्मृतिबलं कृत्वा श्रद्दधानः समाहितः ।
विधूय मानसान्दोषान्मैत्रीं भूतेषु चिन्तयन् ॥ २० ॥
देवताः पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम् ।
देवगोब्राह्मणान्कृत्वा ततस्तां प्रविशेत्कुटीम् ॥ २१ ॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः ।
रसायनं प्रयुञ्जीत तत्प्रवक्ष्यामि शोधनम् ॥ २२ ॥
हरीतकीनां चूर्णानि सैन्धवामलके गुडम् ।
वचां विडङ्गं रजनीं पिप्पलीं विश्वभेषजम् ।
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः ॥ २३ ॥
तेन शुद्धशरीराय कृतसंसर्जनाय च ।
त्रिरात्रं यावकं दद्यात्पञ्चाहं वापि सर्पिषा ।
सप्ताहं वा पुराणस्य यावच्छुद्धेस्तु वर्चसः ॥ २४ ॥

शुद्धकोष्ठं तु तं ज्ञात्वा रसायनमुपाचरेत्।
वयःप्रकृतिसात्म्यज्ञो यौगिकं यस्य यद्भवेत्॥ २५॥
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम्।
दोषानुलोमिनीं लघ्वीं विद्याद्दीपनपाचनीम्॥ २६॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम्।
सर्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम्॥ २७॥
कुष्ठं गुल्ममुदावर्तं शोषं पाण्ड्वामयं मदम्।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम्॥ २८॥
हृद्रोगं सशिरोरोगमतीसारमरोचकम्।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम्॥ २९॥
कफप्रसेकं वैस्वर्यं वैवर्ण्यं कामलां क्रिमीन्।
श्वयथुं तमकं छर्दिं क्लैब्यमङ्गावसादनम्॥ ३०॥
स्रोतोविबन्धान्विविधान्प्रलेपं हृदयोरसोः।
स्मृतिबुद्धिप्रमोहं च जयेच्छीघ्रं हरीतकी॥ ३१॥
अजीर्णिनो रूक्षभुजः स्त्रीमद्यविषकर्षिताः।
सेवेरन्नाभयामेते क्षुत्तृष्णोष्णार्दिताश्च ये॥ ३२॥
तान्गुणाँस्तानि कर्माणि विद्यादामलकीष्वपि।
यान्युक्तानि हरीतक्या वीर्यस्य तु विपर्ययः॥ ३३॥
अतश्चामृतकल्पानि विद्यात्कर्मभिरीदृशैः।
हरीतकीनां शस्यानि भिषगामलकस्य च॥ ३४॥
ओषधीनां परा भूमिर्हिमवान् शैलसत्तमः।
तस्मात्फलानि तज्जानि ग्राहयेत्कालजानि च॥ ३५॥
आपूर्णरसवीर्याणि काले काले यथाविधि।
आदित्यसलिलच्छायापवनप्रीणितानि च॥ ३६॥
यान्यदग्धान्यपूतीनि निर्व्रणान्यगदानि च।"
तेषां प्रयोगं वक्ष्यामि फलानां कर्म चोत्तमम्॥ ३७॥
पञ्चानां पञ्चमूलानां भागान्दशपलोन्मितान्।
हरीतकीसहस्रं च त्रिगुणामलकं नवम्॥ ३८॥

विदारिगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम् ।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रा पञ्चमं गणम् ॥ ३९ ॥
बिल्वाग्निमन्थस्योनाकं काश्मर्यमथ पाटलीम् ।
पुनर्नवाशूर्पपर्ण्यौ बलामेरण्डमेव च ॥ ४० ॥
जीवकर्षभकौ मेदां जीवन्तीं सशतावरीम् ।
शरेक्षुदर्भकाशानां शालीनां मूलमेव च ॥ ४१ ॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत् ।
भागान्यथोक्ताँस्तत्सर्वं साध्यं दशगुणेऽम्भसि ॥ ४२ ॥
दशभागावशेषं तु पूतं तद्ग्राहयेद्रसम् ।
हरीतकीश्च ताः सर्वाः सर्वाण्यामलकानि च ॥ ४३ ॥
तानि सर्वाण्यनस्थीनि फलान्यापोथ्य कूर्चनैः ।
विनीय तस्मिन्निर्यूहे चूर्णानीमानि दापयेत् ॥ ४४ ॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च ।
मुस्तानां सविडङ्गानां चन्दनागुरुणोस्तथा ॥ ४५ ॥
मधुकस्य हरिद्राया वचायाः कनकस्य च ।
भागांश्चतुष्पलान्कृत्वा सूक्ष्मैलायास्त्वचस्तथा ॥ ४६ ॥
सितोपलासहस्रं च चूर्णितं तुलयाधिकम् ।
तैलस्य द्व्याढकं तत्र दद्यात्त्रीणि च सर्पिषः ॥ ४७ ॥
साध्यमौदुम्बरे पात्रे तत्सर्वं मृदुनाग्निना ।
ज्ञात्वा लेह्यमदग्धं च शीतं क्षौद्रेण संसृजेत् ॥ ४८ ॥
क्षौद्रप्रमाणं स्नेहार्धं तत्सर्वं घृतभाजने ।
तिष्ठेत्संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत् ॥ ४९ ॥
या नोपरुन्ध्यादाहारमेव मात्रां जरां प्रति ।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥ ५० ॥
वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः ।
रसायनमिदं प्राप्य बभूवुरमितायुषः ॥ ५१ ॥
मुक्त्वा जीर्णं वपुश्चाग्र्यमवापुस्तरुणं वयः ।
वीततन्द्राक्लमश्वासा निरातङ्काः समाहिताः ॥ ५२ ॥

मेधास्मृतिबलोपेताश्चिररात्रं तपोधनाः ।
ब्राह्म्यं तपो ब्रह्मचर्यं चेरुश्चात्यन्तनिष्ठया ॥ ५३ ॥
रसायनमिदं ब्राह्म्यमायुष्कामः प्रयोजयेत् ।
दीर्घमायुर्वयश्चाग्र्यं कामाँश्चेष्टान्समश्नुते ॥ ५४ ॥

इति ब्राह्म्यरसायनम् ।

यथोक्तगुणानामामलकानां सहस्रं पिष्ट्वा स्वेदनविधिना पयस ऊष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत् । तदामलकसहस्र-स्वरसपरिपीतं स्थिरापुनर्नवाजीवन्तीनागबलाब्रह्मसुवर्चलामण्डूक-पर्णीशतावरीशङ्खपुष्पीपिप्पलीवचाविडङ्गस्वयंगुप्तामृताचन्दनागुरुम-धुकमधूकपुष्पोत्पलपद्ममालतीयुवतीयूथिकाचूर्णाष्टभागसंयुक्तम् । पुनर्नागबलासहस्रपलस्वरसपरिपीतमनातपशुष्कं द्विगुणितसर्पिषा क्षौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ दृढे घृतभाविते कुम्भे भस्मराशेरधः स्थापयेत् । अन्तर्भूमेः पक्षं कृतरक्षाविधानमथर्ववेद-वित्पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायसचूर्णाष्टभागसं-युक्तमर्धकर्षवृद्ध्या यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्नि-बलमभिसमीक्ष्य जीर्णे च षष्टिकं पयसा ससर्पिष्कमुपसेवमानो यथोक्तान्गुणान्समश्नुते इति ॥ ५५ ॥

भवन्ति चात्र ।

इदं रसायनं ब्राह्म्यं महर्षिगणसेवितम् ।
भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः ॥ ५६ ॥
कान्तः प्रजानां सिद्धार्थश्चन्द्रादित्यसमद्युतिः ।
श्रुतं धारयते सत्त्वमार्षं चास्य प्रवर्तते ॥ ५७ ॥
धरणीधरसारश्च वायुना समविक्रमः ।
स भवत्यविषं चास्य गात्रे संपद्यते विषम् ॥ ५८ ॥

इति द्वितीयब्राह्म्यरसायनयोगः ।

बिल्वाग्निमन्थौ स्योनाकः काश्मर्यं पाटलिर्बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥ ५९ ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरुः ।
अभया चामृता ऋद्धिर्जीवकर्षभकौ शटी ॥ ६० ॥

मुस्तं पुनर्नवा मेदा एला चन्दनमुत्पलम् ।
विदारीवृषमूलानि काकोली काकनासिका ॥ ६१ ॥
एषां पलोन्मितान्भागाञ्शतान्यामलकस्य च ।
पञ्च दद्यात्तदैकत्र जलद्रोणे विपाचयेत् ॥ ६२ ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम् ।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥ ६३ ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्धतुलां भिषक् ।
मत्स्यण्डिकायाः पूताया लेहवत्साधु साधयेत् ॥ ६४ ॥
षट्पलं मधुनश्चात्र सिद्धशीते समावपेत् ।
चतुष्पलं तुगाक्षीर्याः पिप्पलीद्विपलं तथा ॥ ६५ ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात् ।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥ ६६ ॥
कासश्वासहरश्चैष विशेषेणोपदिश्यते ।
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्धनः ॥ ६७ ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ।
पिपासां मूत्रशुक्रस्थान्दोषाँश्चाप्यपकर्षति ॥ ६८ ॥
अस्य मात्रां प्रयुञ्जीत योऽवरुन्ध्यान्न भोजनम् ।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत्पुनर्युवा ॥ ६९ ॥
मेधां स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं बलमिन्द्रियाणाम् ।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥ ७० ॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात् ।
जराकृतं रूपमपास्य सर्वं बिभर्ति रूपं नवयौवनस्य ॥ ७१ ॥

इति च्यवनप्राशः ।

अथामलक-हरीतकीनामामलक-बिभीतकानामामलक-हरीतकी-बिभीतकानां वा पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलस्विन्नानामकुलकानां पलसहस्रमुदूखले संपोथ्य दधिघृतमधुपललतैलशर्करासंप्रयुक्तं भक्षयेदनन्नभुग्यथोक्तेन विधिना। तस्यान्ते यवाग्वादिभिः प्रकृत्यवस्थापनमभ्यङ्गोत्सादनं सर्पिषा यवचूर्णैश्चायं च रसायनप्रयोगप्रकर्षो द्विस्तावदग्निबलमभिसमीक्ष्य प्रतिभोजनं यूषेण

पयसा वा षष्टिकः ससर्पिष्कोऽतःपरं यथासुखविहारः कामभक्ष्यः स्यात्। अनेन प्रयोगेण ऋषयः पुनर्युवत्वमवापुर्बभूवुश्चानेकवर्षशतजीविनो निर्विकाराः परं शरीरबुद्धीन्द्रियबलसमुदिताश्चेरुश्चात्यन्तनिष्ठं तप इति ॥ ७२ ॥

इति चतुर्थामलकरसायनम्।

हरीतक्यामलकबिभीतकपञ्चपञ्चमूलनिर्यूहेण पिप्पलीमधुमधूककाकोलीक्षीरकाकोलीआत्मगुप्ताजीवकर्षभकक्षीरशुक्लाकल्कसंप्रयुक्तेन विदारीस्वरसेन क्षीराष्टगुणसंप्रयुक्तेन च सर्पिषः कुम्भं साधयित्वा प्रयुञ्जानोऽग्निबलं समवेक्ष्यैव। जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमुष्णोदकानुपानमश्नन् जराव्याधिपापाभिचारभयव्यपगतशरीरः बुद्धीन्द्रियबलमतुलमुपलभ्याप्रतिहतसर्वारम्भः परमायुरवाप्नुयादिति ॥ ७३ ॥

इति पञ्चमहरीतकी।

हरीतक्यामलकबिभीतकहरिद्रा-स्थिरावचाविडङ्गामृतवल्लीविश्वभेषजमधूकपिप्पलीसोमवल्कसिद्धेन क्षीरसर्पिषा मधुशर्कराभ्यामपि च सन्नीयामलकस्वरसशतपलपीतमामलकचूर्णमयश्चूर्णचतुर्भागसंप्रयुक्तं पाणितलमात्रं प्रातः प्रातः प्राश्य यथोक्तेन विधिना सायं मुद्गयूषेण पयसा वा ससर्पिष्कं शालिषष्टिकमश्नीयात्। त्रिवर्षप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति श्रुतमवतिष्ठते सर्वामयाः प्रशाम्यन्ति विषमविषं भवति गात्रे गात्रमश्मवत् स्थिरीभवति अदृश्यो भूतानां भवतीति ॥ ७४ ॥

भवन्ति चात्र।

यथाऽमराणाममृतं यथा भोगवतां सुधा।
तथाऽभवन्महर्षीणां रसायनविधिः पुरा ॥ ७५ ॥
न जरां न च दौर्बल्यं नातुर्यं निधनं न च।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा ॥ ७६ ॥
न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते।

गतिं सदेवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथेति चाक्षरम् ॥ ७७ ॥

तत्र श्लोकः ।

अभयामलकीयेऽस्मिन्षड्योगाः परिकीर्तिताः ।
रसायनानां सिद्धानामायुर्यैरनुवर्तते ॥ ७८ ॥

इत्यभयामलकीये रसायनपादः प्रथमः ।

---

## अथातः प्राणकामीयं रसायनपादं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ।

"प्राणकामाः शुश्रूषध्वमिदमुच्यमानममृतमिवापरमदितिसुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसः स्थापनं निद्रातन्द्राश्रमक्लमालस्यदौर्बल्यापहरमनिलकफपित्तसाम्यकरं स्थैर्यकरमबद्धमांसहरमन्तराग्निसंधुक्षणं प्रभावर्णस्वरोत्तमकरं रसायनविधानम् । अनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुः । नारीणां चेष्टतमा बभूवुः । स्थिरसमसुविभक्तमांसाः सुसंहतस्थिरशरीराः सुप्रसन्नबलवर्णेन्द्रियाः सर्वत्राप्रतिहतपराक्रमाः सर्वक्लेशसहाश्च ७९

सर्वे शरीरदोषा भवन्ति ग्राम्याद्याहारादम्ललवणकटुकक्षारशुष्कशाकमांसतिलपललपिष्टान्नभोजिनां विरूढनवशूकशमीधान्यविरुद्धासात्म्यरूक्षक्षाराभिष्यन्दिभोजिनां क्लिन्नगुरुपूतिपर्युषितभोजिनां विषमाशनाध्यशनप्रियाणां दिवास्वप्नस्त्रीमद्यनित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां भयक्रोधशोकलोभमोहायासबहुलानाम् । अतोनिमित्ताद्धि शिथिलीभवन्ति मांसानि विमुच्यन्ते सन्धयो विदह्यन्ते रक्तं विष्यन्दते चानल्पं मेदो न सन्धीयतेऽस्थिषु मज्जा शुक्रं न प्रवर्तते क्षयमुपैत्योजः । स एवंभूतो ग्लायति सीदति निद्रातन्द्रालस्यसमन्वितो निरुत्साहः श्वसिति । असमर्थश्चेष्टानां शारीरमानसानां नष्टस्मृतिबुद्धिच्छायो रोगाणामधिष्ठानभूतो न सर्वमायुरवाप्नोति । तस्मादेतान्दोषानवेक्षमाणः सर्वान्यथोक्तानहितानपास्याहारविहारान् रसायनानि प्रयोक्तुमर्हति ॥ ८० ॥

इत्युक्त्वा भगवान्पुनर्वसुरात्रेय उवाच । आमलकानां सुभूमि-

जानां कालजानामनुपहतगन्धवर्णरसानामापूर्णरसप्रमाणवीर्याणां स्वरसेन पुनर्नवाकल्कपादसंप्रयुक्तेन सर्पिषा साधयेदाढकमतःपरं विदारीस्वरसेन जीवन्तीकल्कसंप्रयुक्तेन । अतःपरं चतुर्गुणेन पयसा वा बलातिबलाकषायेण शतावरीकल्कसंप्रयुक्तेन । अनेन क्रमेणैकैकं शतपाकं सहस्रपाकं वा शर्कराक्षौद्रचतुर्भागसंयुक्तं सौवर्णे राजते मार्त्तिके वा शुचौ दृढे घृतभाविते कुम्भे स्थापयेत् । तद्यथोक्तेन विधिना यथाग्नि प्रातः प्रातः प्रयोजयेत् । जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात् । अस्य प्रयोगाद्वर्षशतं वयोऽजरं तिष्ठति श्रुतमवतिष्ठते सर्वामयाः प्रशाम्यन्ति अप्रतिहतगतिः स्त्रीष्वपत्यवान्भवति ॥ ८१ ॥

भवति चात्र ।

बृहच्छरीरं गिरिसारसारं स्थिरेन्द्रियं चातिबलेन्द्रियं च ।
अधृष्यमन्यैरतिकान्तरूपं प्रशस्तपूजासुखचित्तभाक्च ॥ ८२ ॥
बलं महद्वर्णविशुद्धिरग्र्या स्वरो घनौघस्तनितानुकारी ।
भवत्यपत्यं विपुलं स्थिरं च समश्नुतो योगमिमं नरस्य ॥८३॥"

इत्यामलकघृतम् ।

आमलकसहस्रं पिप्पलीसहस्रसंप्रयुक्तं पलाशतरुभस्मनः क्षारोदकोत्तरं तिष्ठेत् । तदनुगतक्षारोदकमनातपशुष्कमनस्थिचूर्णीकृतं चतुर्गुणाभ्यां मधुसर्पिर्भ्यां संनीय शर्कराचूर्णचतुर्भागसंप्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमेस्तस्योत्तरकालमग्निबलसमां मात्रां खादेत् पौर्वाह्णिकः प्रयोगः । सात्म्यपथ्यश्चाहारविधिर्नापराह्णिकः । अस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठति समानं पूर्वेण ॥ ८४ ॥

इत्यामलकावलेहः ।

आमलकचूर्णाढकमेकविंशति-रात्रमामलक-सहस्रस्वरसपरिपीतं मधुघृताढकाभ्यां द्वाभ्यामेकीकृतमष्टभागपिप्पलीकं शर्कराचूर्णचतुर्भागसंप्रयुक्तं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात्तद्वर्षान्ते सात्म्यपथ्याशी प्रयोजयेत् । अस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ ८५ ॥

इत्यामलकचूर्णम् ।

विडङ्गतण्डुलचूर्णानामाढकं पिप्पलीतण्डुलानामध्यर्धाढकं सितो-

पलासर्पिस्तैलमधूढकैः षड्भिरेकीकृतघृतभाजनस्थं प्रावृषि भस्मराशाविति सर्वं समानं पूर्वेण यावदाशी ॥ ८६ ॥

इति विडङ्गावलेहः ।

यथोक्तगुणानामामलकानां सहस्रमार्द्रपलाशद्रोण्यां सपिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत् । तानि सुस्विन्नशीतानि उद्धृतकुलकान्यापोथ्याढकेन पिप्पलीचूर्णानामाढकेन च विडङ्गतण्डुलचूर्णानामध्यर्धेन चाढकेन शर्कराचूर्णानां द्वाभ्यां द्वाभ्यामाढकाभ्यां तैलस्य मधुनः सर्पिषश्च संयोज्य शुचौ दृढे घृतभाविते कुम्भे स्थापयेदेकविंशतिरात्रमत ऊर्ध्वं प्रयोगः । अस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समं पूर्वेण ॥ ८७ ॥

इत्यामलकावलेहोऽपरः ।

धन्वनि कुशास्तीर्णे स्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा व्यपगतविषश्वापदपवनसलिलाग्निदोषे कर्षवल्मीकश्मशानचैत्योषररसवर्जिते देशे यथर्तुसुखपवनसलिलादित्यसेविते जातान्यनुपहतान्यनध्यारूढान्यबालान्यजीर्णान्यविगतवीर्याणि शीर्णपुराणपर्णान्यसंजातफलानि तपसि तपस्ये वा मासे शुचिः प्रयतः कृतदेवार्चनः स्वस्ति वाचयित्वा द्विजातीन्सुमुहूर्ते नागबलामूलान्युद्धरेत् । तेषां सुप्रक्षालितानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टमालोड्य पयसा प्रातः प्रयोजयेत् । चूर्णीकृतानि वा पिबेत् । पयसा मधुसर्पिर्भ्यां वा संयोज्य भक्षयेत् । जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात् । संवत्सरप्रयोगादस्य वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ ८८ ॥ इति नागबलारसायनम् ।

बलातिबलाचन्दनागुरुधवतिनिशखदिरशिंशपासनस्वरसाः पुनर्नवान्ताश्चौषधयो दश ये वयःस्थापना व्याख्यातास्तेषां स्वरसा नागबलावत् स्वरसानामलाभे त्वयं स्वरसविधिश्चूर्णानामाढकमुदकस्याहोरात्रस्थितं मृदितपूतं स्वरसवत्प्रयोज्यम् ॥ ८९ ॥

भल्लातकानि अनुपहतानि अनामयानि आपूर्णरसप्रमाणवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे संगृह्य यवपल्वे

माषपल्वे वा निधापयेत् । तानि चतुर्मासस्थितानि सहसि सहस्ये वा मासे प्रयोक्तुमारभेत । शीतस्निग्धमधुरोपस्कृतशरीरः पूर्वं दश भल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत् । तेषां रसमष्टभागावशिष्टं पूतं सपयस्कं पिबेत् सर्पिषान्तर्मुखमभ्यज्य तानि एकैकभल्लातकोत्कर्षापकर्षेण दश भल्लातकानि आत्रिंशतः प्रयोज्यानि । नातःपरमुत्कर्षः प्रयोगविधाने नासहस्रपर एव भल्लातकप्रयोगः । जीर्णे च सर्पिषा पयसा शालिषष्टिकाशनमुपचारः प्रयोगान्ते च द्विस्तावत् पयसैवोपचारः तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ ९० ॥ इति भल्लातकक्षीरम् ।

भल्लातकानां जर्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमौ आकण्ठं निखातस्य स्नेहभावितस्य दृढस्योपरि कुम्भस्यारोप्योडुपेनापिधाय कृष्णमृत्तिकावलिप्तं गोमयाग्निभिरुपस्वेदयेत् । तेषां यः स्वरसः कुम्भं प्रपद्येत ततोऽष्टभागमधुसंप्रयुक्तं द्विगुणघृतमद्यात् । तत्प्रयोगाद्वर्षशतमक्षरं वयस्तिष्ठतीति समानं पूर्वेण ॥ ९१ ॥

इति भल्लातकक्षौद्रम् ।

भल्लातकतैलपात्रं सपयस्कं मधुकेन कल्केनाक्षमात्रेण शतपाकं कुर्यात्समानं पूर्वेण ॥ ९२ ॥

इति भल्लातकतैलम् ।

भल्लातकक्षीरं भल्लातकक्षौद्रं भल्लातकतैलमेवं गुडभल्लातकयूषो भल्लातकसर्पिर्भल्लातकपललं भल्लातकशक्तवो भल्लातकलवणं भल्लातकतर्पणमिति भल्लातकविधानमुक्तम् ॥ ९३ ॥

इति भल्लातकविधिः ।

भवन्ति चात्र ।

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ ९४ ॥
एते दशविधास्त्वेषां प्रयोगाः परिकीर्तिताः ।
रोगप्रकृतिसात्म्यज्ञस्तान्प्रयोगान्प्रकल्पयेत् ॥ ९५ ॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यं न भल्लातकं हन्याच्छीघ्रं मेधाग्निवर्धनम् ॥ ९६ ॥

प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः ।
रसायनैः शिवैरेतैर्बभूवुरमितायुषः ॥ ९७ ॥
ज्ञानं तपो ब्रह्मचर्यमध्यात्म्यं ध्यानमेव च ।
दीर्घायुषो यथाकामं संभृज्य त्रिदिवं गताः ॥ ९८ ॥
तस्मादायुःप्रकर्षार्थं प्राणकामैः सुखार्थिभिः ।
रसायनविधिः सेव्यो विधिवत्सुसमाहितैः ॥ ९९ ॥

तत्र श्लोकः ।

रसायनानां संयोगाः सिद्धा भूतहितैषिणा ।
निर्दिष्टाः प्राणकामीये सप्त चैवं दशर्षिणा ॥ १०० ॥

इति प्राणकामीये रसायनपादो द्वितीयः ।

---

## अथातः करप्रचितीयं रसायनपादं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ।

करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां पुनर्माघे फाल्गुने वा मासे त्रिःसप्तकृत्वः स्वरसपरिपीतानां पुनः शुष्कचूर्णीकृतानामाढकमेकं ग्राहयेत् । अथ जीवनीयानां बृंहणीयानां स्तन्यजननानां शुक्रवर्धनानां वयःस्थापनानां षड्विरेचनशताश्रितीयोक्तानामौषधगणानां चन्दनागुरुधवखदिरशिंशपासमसाराणां चाणुशश्छिन्नानां क्षिप्तानामभयाबिभीतकपिप्पलीवचाचव्यचित्रकविडङ्गानां च समस्तानामाढकमेकं दशगुणेनाम्भसा साधयेत् । तस्मिन् आढकावशेषे रसे सुपूते तानि आमलकचूर्णानि दत्त्वा गोमयाग्निभिर्वंशविदलशरतेजनाग्निभिर्वा साधयेत् । यावदपनयाद्रसस्य तमनुपदग्धमुपहृत्यायसीषु पात्रीष्वास्तीर्य शोषयेत् । सुशुष्कं तं कृष्णाजिनस्योपरि दृषदि श्लक्ष्णपिष्टमयःस्थाल्यां निधापयेत्सम्यक् । तच्चूर्णमयश्चूर्णाष्टभागसंप्रयुक्तं मधुसर्पिर्भ्यामग्निबलमभिसमीक्ष्य प्रयोजयेदिति ॥ १०१ ॥"

तत्र श्लोकाः ।

एतद्रसायनं पूर्वं वसिष्ठः कश्यपोऽङ्गिराः ।
जमदग्निर्भरद्वाजो भृगुरन्ये च तद्विधाः ॥ १०२ ॥

प्रयुज्य प्रयता मुक्ताः श्रमव्याधिजराभयात् ।
यावदैच्छँस्तपस्तेपुस्तत्प्रभावान्महाबलाः ॥ १०३ ॥
तपसा ब्रह्मचर्येण ध्यानेन प्रशमेन च ।
रसायनविधानेन कालयुक्तेन चायुषा ॥ १०४ ॥
स्थिता महर्षयः पूर्वं न हि किंचिद्रसायनम् ।
ग्राम्याणामन्यकार्याणां सिद्धिश्चाप्रयतात्मनाम् ॥ १०५ ॥
इदं रसायनं चक्रे ब्रह्मा वार्षसहस्रिकम् ।
जराव्याधिप्रशमनं बुद्धीन्द्रियबलप्रदम् ॥ १०६ ॥

इत्यामलकायसं रसायनम् ।

संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत्सदा ।
सावित्रीं मनसा ध्यायन्ब्रह्मचारी जितेन्द्रियः ॥ १०७ ॥
संवत्सरान्ते पौषीं वा माघीं वा फाल्गुनीं तिथिम् ।
त्र्यहोपवासी शुद्धश्च प्रविश्यामलकीवनम् ॥ १०८ ॥
बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलम् ।
गृहीत्वा पाणिना तिष्ठेज्जपन्ब्रह्मामृतागमात् ॥ १०९ ॥
तदा ह्यवश्यममृतं वसत्यामलके क्षणम् ।
शर्करा मधुकल्पानि स्नेहवन्ति मृदूनि च ॥ ११० ॥
भवन्त्यमृतसंयोगात्तानि यावन्ति भक्षयेत् ।
जीवेद्वर्षसहस्राणि तावन्त्यागतयौवनः ॥ १११ ॥
सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः ।
स्वयं चास्योपतिष्ठन्ते श्रीर्वेदा वाक्च रूपिणी ॥ ११२ ॥

इति केवलामलकं रसायनम् ।

त्रिफलाया रसे मूत्रे गवां क्षारे च लावणे ।
क्रमेण चेङ्गुदीक्षारे किंशुकक्षार एव च ॥ ११३ ॥
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि वापयेत् ।
चतुरङ्गुलदीर्घाणि तिलोत्सेधसमानि च ॥ ११४ ॥
ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत् ।
तानि चूर्णानि मधुना रसेनामलकस्य च ॥ ११५ ॥

युक्तानि लेहवत्कुम्भे स्थितानि घृतभाविते ।
संवत्सरं निधेयानि यवपल्ले तदेव च ॥ ११६ ॥
दद्यादालोडनं मासे सर्वत्रालोडयन्बुधः ।
संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा ॥ ११७ ॥
प्रातः प्रातर्बलापेक्षी सात्म्यं जीर्णे च भोजनम् ।
एष एव च लोहानां प्रयोगः संप्रकीर्तितः ॥ ११८ ॥
अनेनैव विधानेन हेम्नश्च रजतस्य च ।
आयुःप्रकर्षकृत्सिद्धः प्रयोगः सर्वरोगनुत् ॥ ११९ ॥
नाभिघातैर्न चातङ्कैर्जरया न च मृत्युना ।
अधृष्यः स्याद्गजप्राणः सदा चातिबलेन्द्रियः ॥ १२० ॥
धीमान्यशस्वी वाक्सिद्धः श्रुतधारी महाबलः ।
भवेत्समां प्रयुञ्जानो नरो लौहरसायनम् ॥ १२१ ॥

इति लौहादिरसायनम् ।

ऐन्द्री मत्स्याक्षिको ब्राह्मी वचा ब्रह्मसुवर्चला ।
पिप्पल्यो लवणं हेम शङ्खपुष्पी विषं घृतम् ॥ १२२ ॥
एषां त्रियवकान्भागान्हेमसर्पिर्विषैर्विना ।
द्वौ यवौ तत्र हेम्नस्तु तिलं दद्याद्विषस्य च ॥ १२३ ॥
सर्पिषश्च पलं दद्यात्तदैकध्यं प्रयोजयेत् ।
घृतप्रभूतं सक्षौद्रं जीर्णे चान्नं प्रशस्यते ॥ १२४ ॥
जराव्याधिप्रशमनं स्मृतिमेधाकरं परम् ।
आयुष्यं पौष्टिकं बल्यं स्वरवर्णप्रसादनम् ॥ १२५ ॥
परमोजस्करं चैतत्सिद्धमेतद्रसायनम् ।
नैनं प्रसहते कृत्या नालक्ष्मीर्न विषं न रुक् ॥ १२६ ॥
श्वित्रं सकुष्ठं जठराणि गुल्माः प्लीहा पुराणो विषमज्वरश्च ।
मेधास्मृतिज्ञानहराश्च रोगाः शाम्यन्त्यनेनातिबलाश्च वाताः ॥१२७

इति ऐन्द्रीरसायनम् ।

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥

आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी ॥१२९

इति मेध्यरसायनानि ।

पञ्च षट् सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ १३० ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ १३१ ॥
प्रयोज्या मधुसर्पिर्भ्यां रसायनगुणैषिणा ।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयान् ॥ १३२ ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्यं पीनसं शोफं गुल्मं वातबलासकम् ॥ १३३ ॥

इति पिप्पलीरसायनम् ।

क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम् ।
वर्धयेत्पयसा सार्धं तथा चापनयेत्पुनः ॥ १३४ ॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥ १३५ ॥
पिष्टास्ता बलिभिः सेव्याः शृता मध्यबलैर्नरैः ।
शीतीकृता ह्रस्वबलैर्योज्या दोषामयान्प्रति ॥ १३६ ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्तिताः ।
प्रयोगो यस्त्रिपर्यन्तः स कनीयान्स चाबलैः ॥ १३७ ॥
बृंहणं स्वर्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥ १३८ ॥

इति पिप्पलीवर्धमानं रसायनम् ।

जरणान्तेऽभयामेकां प्राग्भुक्ते द्वे बिभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च ॥ १३९ ॥
प्रयोजयेत्समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ १४० ॥

इति त्रिफलानां रसायनम् ।

त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत्क्षौद्रोदकाप्लुतम् ॥ १४१ ॥
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चैव समाः शतम् ॥ १४२ ॥
इति त्रिफलारसायनमपरम् ।

मधुकेन तुगाक्षीर्या पिप्पल्या क्षौद्रसर्पिषा ।
त्रिफला सितया चापि युक्ता सिद्धं रसायनम् ॥ १४३ ॥
इति त्रिफलारसायनमपरम् ।

सर्वलोहैः सुवर्णेन वचया मधुसर्पिषा ।
विडङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ॥ १४४ ॥
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा ।
भवत्यायुष्प्रदा धन्या जरारोगनिबर्हणी ॥ १४५ ॥
इति त्रिफलारसायनमपरम् ।

अनम्लं च कषायं च कटुपाके शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य संभवः ॥ १४६ ॥
हेम्नश्च रजतात्ताम्राद्वरं कृष्णायसादपि ।
रसायनं तद्विधिभिस्तद्वृष्यं तच्च रोगनुत् ॥ १४७ ॥
वातपित्तकफघ्नैस्तु निर्यूहैस्तत्सुभावितम् ।
वीर्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥ १४८ ॥
प्रक्षिप्योद्धृतमप्येनं पुनस्तत्प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥ १४९ ॥
पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैः सह ।
तत्पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम् ॥ १५० ॥
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम् ।
मेधास्मृतिकरं बल्यं क्षीराशी तत्प्रयोजयेत् ॥ १५१ ॥
प्रयोगः सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः ।
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा ।
पलमर्धपलं कर्षो मात्रा तस्य त्रिधा मता ॥ १५२ ॥
इति शिलाजतुप्रयोगः ।

जातेर्विशेषं सविधं तस्य वक्ष्याम्यतःपरम्।
हेमाद्याः सूर्यसन्तप्ताः स्रवन्ति गिरिधातवः॥ १५३॥
जत्वाभं मृदुमृत्स्नाभं यन्मलं तच्छिलाजतु।
मधुरश्च सतिक्तश्च जपापुष्पनिभश्च यः॥ १५४॥
कटुर्विपाके शीतश्च स सुवर्णस्य निस्रवः।
रूप्यस्य कटुकः श्वेतः शीतः स्वादु विपच्यते॥ १५५॥
ताम्रस्य बर्हिकण्ठाभस्तिक्तोष्णः कटु पच्यते।
यस्तु गुग्गुलुकाभासस्तिक्तको लवणान्वितः॥ १५६॥
कटुर्विपाके शीतश्च सर्वश्रेष्ठः स चायसः।
गोमूत्रगन्धयः सर्वे सर्वकर्मसु यौगिकाः॥ १५७॥
रसायनप्रयोगेषु पश्चिमस्तु विशिष्यते।
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु॥ १५८॥
विशेषतः प्रशस्यन्ते मला हेमादिधातुजाः।
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च।
वर्जयेत्सर्वकालस्तु कुलत्थान्परिवर्जयेत्॥ १५९॥
ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम्।
लोके दृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते॥ १६०॥

पयांसि शुक्तानि रसाः सयूषास्तोयं समूत्रं विविधाः कषायाः।
आलोडनार्थं गिरिजस्य शस्तास्ते ते प्रयोज्याः प्रसमीक्ष्य कार्यम् १६१
न सोऽस्ति रोगो भुवि साध्यरूपः शिलाह्वयं यं न जयेत्प्रसह्य।
तत्कालयोगैर्विधिभिः प्रयुक्तं स्वस्थस्य चोर्जां विपुलां ददाति १६२

इति शिलाजतुरसायनम्।

तत्र श्लोकः।

करप्रचितिके पादे दश षट् च महर्षिणा।
रसायनानां सिद्धानां संयोगाः समुदाहृताः॥ १६३॥

इति करप्रचितीये रसायनपादस्तृतीयः।

---

## अथात आयुर्वेदसमुत्थानीयं चतुर्थं रसायनपादं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ।

ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः सांपन्निका मन्दचेष्टा नातिकल्याणाश्च प्रायेण बभूवुः । ते सर्वासामितिकर्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतं दोषं मत्वा पूर्वनिवासमपगतग्राम्यदोषं मत्वा शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममरगन्धर्वयक्षकिन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभावमतिशरण्यं हिमवन्तममराधिपतिगुप्तं जग्मुः भृग्वङ्गिरोऽत्रिवशिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगौतमप्रभृतयो महर्षयः ॥ १६४ ॥

तान् इन्द्रः सहस्रदृक् अमरगुरुवरोऽब्रवीत् । स्वागतं ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणामस्ति । ननु वो ग्लानिरप्रभावत्वं वैस्वर्यं वैवर्ण्यं च ग्राम्यवासकृतमसुखानुबन्धं च । ग्राम्यो हि वासो मूलमशस्तानां तत्कृतं पुण्यकृद्भिरनुग्रहः प्रजानां स्वशरीरमरक्षिभिः कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणामात्मनः प्रजानां चानुग्रहार्थमायुर्वेदमश्विनौ मह्यं प्रयच्छताम् । प्रजापतिरश्विभ्याम् । प्रजापतये ब्रह्मा प्रजानामल्पमायुर्जराव्याधिबहुलमसुखमसुखानुबन्धम् अल्पत्वादल्पतपोदमनियमदानाध्ययनसंचयं मत्वा पुण्यतममायुःप्रकर्षकरं जराव्याधिप्रशमनम् ऊर्जस्करममृतं शिवं शरण्यमुदात्तं भवन्तो मत्तः श्रोतुमर्हन्ति उपधारयितुं प्रकाशयितुं च प्रजानुग्रहार्थमार्षं ब्रह्म च मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षयं कर्मेति ॥ १६५ ॥

तच्छ्रुत्वा विबुधपतिवचनमृषयः सर्व एवामरवरमृग्भिस्तुष्टुवुः प्रहृष्टास्तद्वचनमभिननन्दुश्चेति । अथेन्द्रस्तदायुर्वेदामृतं ऋषिभ्यः संक्रम्योवाचैतत्सर्वमनुष्ठेयं च । अयं च शिवः कालो रसायनानां दिव्याश्चौषधयो हिमवतः प्रभवा प्राप्तवीर्याः ॥ १६६ ॥”

इति समुत्थानीयरसायनपादः ।

तद्यथा—ऐन्द्री ब्राह्मी पयस्या क्षीरपुष्पी श्रावणी महाश्रावणी

शतावरी विदारी जीवन्ती पुनर्नवा नागबला स्थिरा वचा छत्रा-तिच्छत्रा मेदा महामेदा जीवनीयाश्चान्याः पयसा प्रयुक्ताः। षण्मासात्परममायुर्वयश्च तरुणमनामयत्वं स्वरवर्णसंपदनुपचयं मेधां स्मृतिमुत्तमबलमिष्टाँश्चापरान्भावानावहन्ति सिद्धः॥ १६७॥

इति इन्द्रोक्तं रसायनम्।

ब्रह्मसुवर्चलानामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा आदित्यपर्णी नामौषधिर्या सूर्यकान्तेति विज्ञायते सुवर्णवर्णक्षीरा सूर्यमण्डलाकारपुष्पा च। नारी नामौषधिरश्वबलेति विज्ञायते या पुनरजसदृशपत्रा। काष्ठगोधानामौषधिर्गोधाकारा। सर्पा नामौषधिः सर्पाकारा। सोमो नामौषधिराजः पञ्चदशपर्णः स सोम इव हीयते वर्धते च। पद्मा नामौषधिः पद्माकारा पद्मरक्ता पद्मगन्धा। अजा नामौषधिरजशृङ्गीति विज्ञायते। नीला नामौषधिस्तु नीलक्षीरा नीलपुष्पा लताप्रतानबहुला। इत्यासामष्टानामौषधीनां यां यामेवौषधिं लभेत तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां सपिधानायां शयीत। तत्र प्रलीयते षण्मासेन पुनःपुनः संभवति। तस्याजं पयः प्रत्यवस्थापनम्। षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः। स्वयं चास्य सर्ववाचो गतानि प्रादुर्भवन्ति। दिव्यं चास्य चक्षुः श्रोत्रं भवति योजनसहस्रगतिर्दशवर्षसहस्राण्यायुरनुपद्रवं चेति॥१६८॥

इति द्रोणीप्रावेशिकरसायनम्।

भवन्ति चात्र।

"दिव्यानामौषधीनां यः प्रभावः स भवद्विधैः।
शक्यः सोढुमशक्यस्तु न सोढुमकृतात्मभिः॥ १६९॥
ओषधीनां प्रभावेण तिष्ठतां स्वे च कर्मणि।
भवतां निखिलं श्रेयः सर्वमेवोपपत्स्यते॥ १७०॥
वानप्रस्थैर्गृहस्थैश्च प्रयतैर्नियतात्मभिः।
शक्या ओषधयो ह्येताः सेवितुं विषयाभिजाः॥ १७१॥
तास्तु क्षेत्रगुणैस्तेषां मध्यमेन च कर्मणा।
मृदुवीर्यतया तासां विधिर्ज्ञेयः स एव तु॥ १७२॥

पर्येष्टुं ताः प्रयोक्तुं वा येऽसमर्थाः सुखार्थिनः ।
रसायनविधिस्तेषामयमन्यः प्रशस्यते ॥ १७३ ॥"
बल्यानां जीवनीयानां बृंहणीयाश्च या दश ।
वयसः स्थापनानां च खदिरस्यासनस्य च ॥ १७४ ॥
खर्जूराणां मधूकानां मुस्तानामुत्पलस्य च ।
मृद्वीकानां विडङ्गानां वचायाश्चित्रकस्य च ॥ १७५ ॥
शतावर्याः पयस्यायाः पिप्पल्या जोङ्गकस्य च ।
ऋद्ध्या नागबलायाश्च हरिद्राया धवस्य च ॥ १७६ ॥
त्रिफलाकण्टकार्योश्च विदार्याश्चन्दनस्य तु ।
इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च ॥ १७७ ॥
रसाः पृथक् पृथग्ग्राह्याः पलाशक्षार एव च ।
एषां पलोन्मितान्भागान्पयो गव्यं चतुर्गुणम् ॥ १७८ ॥
द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः ।
तत्साध्यं सर्वमेकत्र सुसिद्धं स्नेहमुद्धरेत् ॥ १७९ ॥
तत्रामलकचूर्णानामाढकं शतभावितम् ।
स्वरसेनैव दातव्यं क्षौद्रस्याभिनवस्य च ॥ १८० ॥
शर्कराचूर्णपात्रं च प्रस्थमेकं प्रदापयेत् ।
तुगाक्षीर्याः सपिप्पल्याः स्थाप्यं संमूर्च्छितं च तत् ॥१८१॥
शुचौ क्षेमार्तिके कुम्भे मासार्धं घृतभाविते ।
मात्रामग्निसमां तस्य तत ऊर्ध्वं प्रयोजयेत् ॥ १८२ ॥
हेमताम्रप्रवालानामयसः स्फटिकस्य च ।
मुक्तावैदूर्यशङ्खानां चूर्णानां रजतस्य च ॥ १८३ ॥
प्रक्षिप्य षोडशो मात्रां विहायायासमैथुनम् ।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ १८४ ॥
सर्वरोगप्रशमनं वृष्यमायुष्यमुत्तमम् ।
सत्त्वस्मृतिशरीराग्निबुद्धीन्द्रियबलप्रदम् ॥ १८५ ॥
परमूर्जस्करं चैव वर्णस्वरकरं तथा ।
विषालक्ष्मीप्रशमनं सर्ववाचो गतप्रदम् ॥ १८६ ॥
सिद्धार्थतां चाभिनवं वयश्च प्रजाप्रियत्वं च यशश्च लोके ।

प्रयोज्यमिच्छद्भिरिदं यथावद्रसायनं ब्राह्ममुदारवीर्यम् ॥ १८७ ॥

इतीन्द्रोक्तरसायनमपरम्।

"समर्थानामरोगाणां धीमतां नियतात्मनाम्।
कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः ॥ १८८ ॥
अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः।
ताभ्यां श्रेष्ठतरः पूर्वो विधिः स तु सुदुष्करः ॥ १८९ ॥
रसायनविधिभ्रंशाज्जायेरन्व्याधयो यदि।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥ १९० ॥
सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात्।
अहिंसकमनायासं प्रशान्तं प्रियवादिनम् ॥ १९१ ॥
जपशौचपरं धीरं दाननित्यं तपस्विनम्।
देवगोब्राह्मणाचार्यगुरुवृद्धार्चने रतम् ॥ १९२ ॥
आनृशंस्यपरं नित्यं नित्यं कारुण्यवेदिनम्।
समजागरणस्वप्ननित्यं क्षीरघृताशिनम् ॥ १९३ ॥
देशकालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम्।
शस्ताचारमसंकीर्णमध्यात्मप्रवणेन्द्रियम् ॥ १९४ ॥
उपासितारं वृद्धानामास्तिकानां जितात्मनाम्।
धर्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ॥ १९५ ॥
गुणैरेतैः समुदितैः प्रयुङ्क्ते यो रसायनम्।
रसायनगुणान्सर्वान्यथोक्तान्स समश्नुते ॥ १९६ ॥
यथा स्थूलमनिर्वाह्य दोषाञ्शारीरमानसान्।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥ १९७ ॥
योगा ह्यायुःप्रकर्षार्था जरारोगनिबर्हणाः।
मनःशरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम् ॥ १९८ ॥
तदेतन्न भवेद्वाच्यं सर्वमेव हतात्मसु।
अरुजेभ्यो द्विजातिभ्यः शुश्रूषा येषु नास्ति च ॥ १९९ ॥
ये रसायनसंयोगा वृष्या योगाश्च ये मताः।
यच्चौषधं विकाराणां सर्वं तद्वैद्यसंश्रयम् ॥ २०० ॥
प्राणाचार्यं बुधस्तस्माद्धीमन्तं वेदपारगम्।

अश्विनाविव देवेन्द्रः पूजयेदतिशक्तितः ॥ २०१ ॥
अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ ।
यज्ञस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम् ॥ २०२ ॥
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च ।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥ २०३ ॥
चिकित्सितस्तु शीतांशुर्गृहीतो राजयक्ष्मणा ।
सोमाभिपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥ २०४ ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥ २०५ ॥
एतैश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥ २०६ ॥
ग्रहाः स्तोत्राणि मन्त्राणि तथान्यानि हवींषि च ।
धूम्राश्च पशवस्ताभ्यां प्रकल्पन्ते द्विजातिभिः ॥ २०७ ॥
प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते ।
सौत्रामण्यां च भगवानश्विभ्यां सह मोदते ॥ २०८ ॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः ।
स्तूयन्ते वेदवाक्येषु न तथान्या हि देवताः ॥ २०९ ॥
अमरैरजरैस्तावद्विबुधैः साधिपैर्ध्रुवैः ।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति ॥ २१० ॥
मृत्युव्याधिजरावश्यैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः ॥ २११ ॥
शीलवान्मतिमान्युक्तो द्विजातिः शास्त्रपारगः ।
प्राणिभिर्गुरुवत्पूज्यः प्राणाचार्यः स हि स्मृतः ॥ २१२ ॥
विद्यासमाप्तौ भिषजस्तृतीया जातिरुच्यते ।
अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ॥ २१३ ॥
विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्षमथापि वा ।
ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यस्त्रिजः स्मृतः ॥ २१४ ॥
नाभिध्यायेन्न चाक्रोशेदहितं न समाचरेत् ।
प्राणाचार्यं बुधः कश्चिदिच्छन्नायुरनित्वरम् ॥ २१५ ॥

चिकित्सितस्तु संश्रुत्य यो वा संश्रुत्य मानवः ।
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ॥ २१६ ॥
भिषगप्यातुरान्सर्वान्स्वसुतानिव यत्नवान् ।
आबाधेभ्यो हि संरक्षेदिच्छन्धर्ममनुत्तमम् ॥ २१७ ॥
धर्मार्थं चार्थकामार्थमायुर्वेदो महर्षिभिः ।
प्रकाशितो धर्मपरैरिच्छद्भिः स्थानमक्षरम् ॥ २१८ ॥
नात्मार्थं नापि कामार्थमथ भूतदयां प्रति ।
वर्तते यश्चिकित्सायां स सर्वमतिवर्तते ॥ २१९ ॥
कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ॥ २२० ॥
दारुणैः कृष्यमाणानां गदैर्वैवस्वतक्षयम् ।
छित्त्वा वैवस्वतान्पाशाञ्जीवितं च प्रयच्छति ॥ २२१ ॥
धर्मार्थसदृशस्तस्य दाता नेहोपलभ्यते ।
न हि जीवितदानाद्धि दानमन्यद्विशिष्यते ॥ २२२ ॥
परो भूतदयाधर्म इति मत्वा चिकित्सया ।
वर्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते ॥ २२३ ॥"

तत्र श्लोकौ ।

आयुर्वेदसमुत्थानां दिव्यौषधिविधिः शुभः ।
अमृताल्पान्तरगुणं सिद्धं रत्नरसायनम् ॥ २२४ ॥
सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः ।
आयुर्वेदसमुत्थाने तत्सर्वं संप्रकाशितम् ॥ २२५ ॥

इति चरकसंहितायां चिकित्सास्थाने प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

## वाजीकरणम् ।

अथातः संप्रयोगशरमूलीयं वाजीकरणपादं व्याख्यास्यामः।

"वाजीकरणमन्विच्छेत्पुरुषो नित्यमात्मवान् ।
तदायत्तौ हि धर्मार्थौ प्रीतिश्च यश एव च ॥ १ ॥

पुत्रस्यायतनं ह्येतद्गुणाश्चैते सुताश्रयाः ।
वाजीकरणमग्र्यं च क्षेत्रं स्त्री या प्रहर्षिणी ॥ २ ॥
इष्टा ह्येकैकशोऽप्यर्थाः परं प्रीतिकराः स्मृताः ।
किं पुनः स्त्रीशरीरे ये सङ्घातेन व्यवस्थिताः ॥ ३ ॥
सङ्घातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते ।
स्त्र्याश्रयो हीन्द्रियार्थो यः स प्रीतिजननोऽधिकः ॥ ४ ॥
स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम् ।
धर्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः ॥ ५ ॥
सुरूपा यौवनस्था या लक्षणैर्या विभूषिता ।
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता ॥ ६ ॥
नानाभक्त्या तु लोकस्य दैवयोगाच्च योषिताम् ।
तं तं प्राप्य विवर्धन्ते नरं रूपादयो गुणाः ॥ ७ ॥
वयोरूपवचोहावैर्या यस्य परमाङ्गना ।
प्रविशत्याशु हृदयं दैवाद्वा कर्मणोऽपि वा ॥ ८ ॥
हृदयोत्सवरूपा या या समानमनोरमा ।
समानसत्त्वा या वश्या या यस्य प्रीतये प्रियैः ॥ ९ ॥
या पाशभूता सर्वेषामिन्द्रियाणां परैर्गुणैः ।
यया वियुक्तो निस्त्रीकमरतिर्मन्यते जगत् ॥ १० ॥
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः ।
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ॥ ११ ॥
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव याम् ।
अपूर्वामिव यां याति नित्यं हर्षातिवेगतः ॥ १२ ॥
गत्वा गत्वापि बहुशो यां तृप्तिं नैव गच्छति ।
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः ॥ १३ ॥
अतुल्यगोत्रां वृष्यां च प्रहृष्टां निरुपद्रवाम् ।
शुद्धस्नातां व्रजेन्नारीमपत्यार्थी निरामयः ॥ १४ ॥
अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ।
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ॥ १५ ॥

चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः।
निष्प्रजस्तृणपूलीति ज्ञातव्यः पुरुषाकृतिः॥ १६॥
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते॥ १७॥
बहुमूर्तिर्बहुमुखो बहुव्यूहो बहुक्रियः।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः॥ १८॥
मङ्गल्योऽयं प्रशस्तोऽयं धन्योऽयं वीर्यवानयम्।
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः॥ १९॥
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विभवः कुलम्।
यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिता॥ २०॥
तस्मादपत्यमन्विच्छन्गुणांश्चापत्यसंश्रितान्।
वाजीकरणनित्यः स्यादिच्छेत्कामसुखानि च॥ २१॥
उपभोगसुखान्सिद्धान्वीर्यापत्यविवर्धनान्।
वाजीकरणसंयोगान्प्रवक्ष्याम्यत उत्तरम्॥ २२॥"
शरमूलेक्षुमूलानि काण्डेक्षुं सेक्षुबालिकम्।
शतावरीं पयस्यां च विदारीं कण्टकारिकाम्॥ २३॥
जीवन्तीं जीवकं मेदां वीरां चर्षभकं बलाम्।
ऋद्धिं गोक्षुरकं रास्नामात्मगुप्तां पुनर्नवाम्॥ २४॥
पृथक् त्रिपलिकान्कृत्वा माषाणामाढकं नवम्।
विपाचयेज्जलद्रोणे चतुर्भागं च शोषयेत्॥ २५॥
तत्र पेष्याणि मधुकं द्राक्षां फल्गूनि पिप्पलीम्।
आत्मगुप्तां मधूकानि खर्जूराणि शतावरीम्॥ २६॥
विदार्यामलकेक्षूणां रसस्य च पृथक् पृथक्।
सर्पिषश्चाढकं दद्यात्क्षीरद्रोणं च तद्भिषक्॥ २७॥
साधयेद्धृतशेषं च सपूतं योजयेत्पुनः।
शर्करायास्तुगाक्षीर्याश्चूर्णैः प्रस्थोन्मितैर्भिषक्॥ २८॥
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च।
त्वगेलाकेशराणां च चूर्णैरर्धपलोन्मितैः॥ २९॥
मधुनः कुडवाभ्यां च द्वाभ्यां तत्कारयेद्भिषक्।

पलिका गुडिकाः कृत्वा ता यथाग्नि प्रयोजयेत् ॥ ३० ॥
एष वृष्यः परो योगो बृंहणो बलवर्धनः ।
अनेनाश्व इवोदीर्णो लिङ्गमर्पयते स्त्रियाम् ॥ ३१ ॥
इति बृंहणीगुडिका ।

माषाणामात्मगुप्ताया बीजानामाढकं नवम् ।
जीवकर्षभकौ वीरां मेदामृद्धिं शतावरीम् ॥ ३२ ॥
मधूकं चाश्वगन्धां च साधयेत्कुडवोन्मिताम् ।
रसे तस्मिन्घृतप्रस्थं गव्यं दशगुणं पयः ॥ ३३ ॥
विदारीणां रसप्रस्थं प्रस्थमिक्षुरसस्य च ।
दत्त्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत् ॥ ३४ ॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्य च पृथक् पृथक् ।
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत्पलम् ॥ ३५ ॥
पलं पूर्वमतो लीढ्वा ततोऽन्नमुपयोजयेत् ।
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम् ॥ ३६ ॥
इति वाजीकरणं घृतम् ।

शर्करामाषविदलास्तुगाक्षीरीपयो घृतम् ।
गोधूमचूर्णषष्टीनि सर्पिष्युत्कारिकां पचेत् ॥ ३७ ॥
तां नातिपक्वां मृदितां कौक्कुटे मधुरे रसे ।
सुगन्धे प्रक्षिपेदुष्णे यथा सान्द्रीभवेद्रसः ॥ ३८ ॥
एष पिण्डरसो वृष्यः पौष्टिको बलवर्धनः ।
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत् ॥ ३९ ॥
शिखितित्तिरिहंसानामेवं पिण्डरसो मतः ।
इति वाजीकरणपिण्डरसः ।

घृतं माषान्सबस्ताण्डान्साधयेन्माहिषे रसे ।
भर्जयेत्तं रसं पूतं फलाम्लं नवसर्पिषि ॥ ४० ॥
ईषत्सलवणं युक्तं धान्यजीरकनागरैः ।
एष वृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः ॥ ४१ ॥
इति वृष्यरसः ।

चटकांस्तित्तिरिरसे तित्तिरीन्कौक्कुटे रसे ।
कुक्कुटान्बार्हिणरसे हांसे बर्हिणमेव च ॥ ४२ ॥
नवसर्पिषि संतप्तान्फलाम्लान्कारयेद्रसान् ।
मधुरान्वा यथासात्म्यं गन्धाढ्यान्बलवर्धनान् ॥ ४३ ॥

इति अन्यवृष्यरसः ।

तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत्पयः ।
न तस्य लिङ्गशैथिल्यं स्यान्न शुक्रक्षयो निशि ॥ ४४ ॥

इति वृष्यमांसः ।

माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम् ।
पयः पिबति रात्रिं स कृत्स्नां जागर्ति वेगवान् ॥ ४५ ॥

इति वृष्यमाषः ।

न ना स्वपिति रात्रीषु नित्यस्तब्धेन च शेफसा ।
तृप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि ॥ ४६ ॥

इति वृष्यशुक्ररसः ।

निःस्राव्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत् ।
हंसबर्हिणदक्षाणि चैवमण्डानि भक्षयेत् ॥ ४७ ॥

इत्यन्यो वृष्यरसः ।

"स्रोतःसु शुद्धेष्वमले शरीरे वृष्यं यदा नामितमत्ति काले ।
वृषायते तेन परं मनुष्यस्तद्बृंहणं चैव बलप्रदं च ॥ ४८ ॥
तस्मात्पुरा शोधनमेव कार्यं बलानुरूपं न हि सिद्धियोगाः ।
सिध्यन्ति देहे मलिने प्रयुक्ताः क्लिष्टे यथा वाससि रागयोगाः" ४९

तत्र श्लोकौ ।

वाजीकरणसामर्थ्यं क्षेत्रं स्त्री यस्य चैव या ।
ये दोषा निरपत्यानां गुणाः पुत्रवतां च ये ॥ ५० ॥
उक्तास्ते शरमूलीये पादे पुष्टिबलप्रदाः ।
दश पञ्च च संयोगा वीर्यापत्यविवर्धनाः ॥ ५१ ॥

शरमूलीये वाजीकरणपादः प्रथमः ।

---

## अथात आसिक्तक्षीरीयं द्वितीयं वाजीकरणपादं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ।

आसिक्तक्षीरमापूर्णमशुष्कं शुद्धषष्टिकम् ।
उदूखले समापोथ्य पीडयेत्क्षीरमर्दितम् ॥ ५२ ॥
क्षुण्णं विमृदितं क्षीरे पीडयेत्सुसमाहितः ।
गृहीत्वा तं रसं पूतं गव्येन पयसा सह ॥ ५३ ॥
बीजानामात्मगुप्ताया धान्यमाषरसेन च ।
बलायाः सूर्पपर्ण्योश्च जीवन्त्या जीवकस्य च ।
ऋद्ध्यर्षभककाकोली श्वदंष्ट्रा मधुकस्य च ॥ ५४ ॥
शतावर्या विदार्याश्च द्राक्षाखर्जूरयोरपि ।
संयुक्तं मात्रया वैद्यः साधयेत्तत्र चावपेत् ॥ ५५ ॥
तुगाक्षीर्याः समाषाणां शालीनां षष्टिकस्य च ।
गोधूमानां च चूर्णानि यैः स सान्द्रीभवेद्रसः ॥ ५६ ॥
सान्द्रीभूतं च तं कुर्यात्प्रभूतमधुशर्करम् ।
गुडिका बदरैस्तुल्यास्ताश्च सर्पिषि भर्जयेत् ॥ ५७ ॥
ता यथाग्नि प्रयुञ्जानः क्षीरमांसरसाशनः ।
पश्यत्यपत्यं विपुलं वृद्धोऽप्यात्मजमक्षयम् ॥ ५८ ॥

इत्यपत्यकरा षष्टिकादिगुडिका ।

चटकानां सहंसानां दक्षाणां शिखिनां तथा ।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत् ॥ ५९ ॥
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि ।
षष्टिकानां च चूर्णानि चूर्णं गोधूममेव च ॥ ६० ॥
एभिः पूपलिकाः कार्याः शष्कुल्यो वर्तिकास्तथा ।
पूपाधानाश्च विविधा भक्ष्याश्चान्ये पृथग्विधाः ॥ ६१ ॥
एषां प्रयोगाद्भक्ष्याणां स्तब्धेनापूर्णरेतसा ।
शेफसा वाजिवद्याति यावदिच्छं स्त्रियो नरः ॥ ६२ ॥

इति वृष्यपूपलिकयोगः ।

आत्मगुप्ताफलं माषः खर्जूराणि शतावरीम् ।

शृङ्गाटकानि मृद्वीकां साधयेत्प्रस्थसंमिताम् ॥ ६३ ॥
क्षीरप्रस्थं जलप्रस्थमेतत्प्रस्थावशेषितम् ।
शुद्धेन वाससा पूतं योजयेत्प्रसृतैस्त्रिभिः ॥ ६४ ॥
शर्करायास्तुगाक्षीर्याः सर्पिषोऽभिनवस्य च ।
तत्पाययेत सक्षौद्रं षष्टिकान्नं च भोजयेत् ॥ ६५ ॥
जरापरीतोऽप्यबलो योगेनानेन विन्दति ।
नरोऽपत्यं सुविपुलं युवेव च स हृष्यति ॥ ६६ ॥

इत्यपत्यकरः स्वरसः ।

खर्जूरीमस्तकं माषान्पयस्यां सशतावरीम् ।
खर्जूराणि मधूकानि मृद्वीकामजडाफलम् ॥ ६७ ॥
पलोन्मितानि मतिमान्साधयेत्सलिलाढके ।
तेन पादावशेषेण क्षीरप्रस्थं विपाचयेत् ॥ ६८ ॥
क्षीरशेषेण तेनाद्याद्घृताढ्यं षष्टिकौदनम् ।
सशर्करेण संयोग एष वृष्यः परं स्मृतः ॥ ६९ ॥

इति वृष्यक्षीरम् ।

जीवकर्षभकौ मेदां जीवन्तीं श्रावणीद्वयम् ।
खर्जूरं मधुकं द्राक्षां पिप्पलीं विश्वभेषजम् ॥ ७० ॥
श्रृङ्गाटकीं विदारीं च नवं सर्पिः पयो जलम् ।
सिद्धं घृतावशेषं तच्छर्करा क्षौद्रपादिकम् ॥ ७१ ॥
षष्टिकान्नेन संयुक्तमुपयोज्यं यथाबलम् ।
वृष्यं बल्यं च वर्ण्यं च कण्ठ्यं बृंहणमुत्तमम् ॥ ७२ ॥

इति वृष्यघृतम् ।

दध्नः सरं शरच्चन्द्रसंनिभं दोषवर्जितम् ।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्याश्च बुद्धिमान् ॥ ७३ ॥
युक्त्या युक्तं सुसूक्ष्मैलं नवे कुम्भे शुचौ पटे ।
मार्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने ॥ ७४ ॥
पिबेन्मात्रां रसालायास्तं भुक्त्वा षष्टिकौदनम् ।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ॥ ७५ ॥

इति वृष्यदध्यादि ।

चन्द्रांशुकल्पं पयसा घृताढ्यं षष्टिकौदनम् ।
शर्करामधुसंयुक्तं प्रयुञ्जानो वृषायते ॥ ७६ ॥

इति वृष्यदुग्धादि ।

तप्ते सर्पिषि नक्राण्डं ताम्रचूडाण्डमिश्रितम् ।
युक्तं षष्टिकचूर्णेन सर्पिषाभिनवेन च ॥ ७७ ॥
पक्त्वा पूपलिकाः खादेद्वारुणीमण्डपो नरः ।
य इच्छेदश्ववद्गन्तुं प्रसेक्तुं गजवच्च यः ॥ ७८ ॥

इति नक्राण्डपाकवृष्ययोगः

भवन्ति चात्र ।

"आसिक्तक्षीरिके पादे ये योगाः परिकीर्तिताः ।
अष्टावपत्यकामैस्ते प्रयोज्याः पौरुषार्थिभिः ॥ ७९ ॥
एतैः प्रयोगैर्विविधैर्वपुष्मान्स्नेहोपपन्नो बलवर्णयुक्तः ।
हर्षान्वितो वाजिवदष्टवर्षो भवेत्समर्थश्च वराङ्गनासु ॥ ८० ॥
यद्यच्च किंचिन्मनसः प्रियं स्याद्रम्या वनान्ताः पुलिनानि शैलाः ।
इष्टाः स्त्रियो भूषणगन्धमाल्यं प्रिया वयस्याश्च तदत्र योगम् ॥ ८१"

इत्यासिक्तक्षीरिके वाजीकरणपादो द्वितीयः ।

---

अथातो माषपर्णतृतीयं वाजीकरणपादं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ।

माषपर्णभृतां धेनुं गृष्टिं पुष्टां चतुःस्तनीम् ।
समानवर्णवत्सां च जीवद्वत्सां च बुद्धिमान् ॥ ८२ ॥
रोहिणीमथवा कृष्णामूर्ध्वशृङ्गीमदारुणाम् ।
इक्ष्वादामर्जुनादां वा सान्द्रक्षीरां च धारयेत् ॥ ८३ ॥
केवलं तु पयस्तस्याः शृतं वा शृतमेव वा ।
शर्करामधुसर्पिर्भिर्युक्तं तद्वृष्यमुत्तमम् ॥ ८४ ॥
शुक्रलैर्जीवनीयैश्च बृंहणैर्बलवर्धनैः ।
क्षीरसंजननैश्चैव पयः सिद्धं पृथक् पृथक् ॥ ८५ ॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयम् ॥ ८६ ॥

मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् ।
श्वदंष्ट्रां क्षीरिकां माषान्गोधूमान्शालिषष्टिकान् ॥ ८७ ॥
पयस्यर्धोदके पक्त्वा कार्षिकानाढकोन्मिते ।
विवर्जयेत्पयःशेषं तत्पूतं क्षौद्रसर्पिषा ॥ ८८ ॥
युक्तं सशर्करं पीत्वा वृद्धः साप्ततिकोऽपि वा ।
विपुलं लभतेऽपत्यं युवेव च स हृष्यति ॥ ८९ ॥
मण्डलैर्जातरूपस्य तस्या एव पयः शृतम् ।
अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम् ॥ ९० ॥
त्रिंशत्सुपिष्टाः पिप्पल्यः प्रकुञ्चे तैलसर्पिषोः ।
भृष्टा सशर्कराः क्षौद्राः क्षीरधारावदोहिताः ॥ ९१ ॥
पीत्वा यथाबलं चोर्ध्वं षष्टिकं क्षीरसर्पिषा ।
भुक्त्वा न रात्रिमस्तब्धं लिङ्गं पश्यति नाक्षरम् ॥ ९२ ॥
श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे ।
घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥ ९३ ॥
फलानां जीवनीयानां स्निग्धानां रुचिकारिणाम् ।
कुडवश्चूर्णितानां स्यात्स्वयंगुप्ताफलस्य च ॥ ९४ ॥
कुडवश्चैव माषाणां द्वौ द्वौ च तिलमुद्गयोः ।
गोधूमशालिचूर्णानां कुडवः कुडवो भवेत् ॥ ९५ ॥
सर्पिषः कुडवश्चैकस्तत्सर्वं क्षीरसंयुतम् ।
पक्त्वा पूपलिकाः खादेद्बह्व्यः स्युर्यदि योषितः ॥ ९६ ॥
घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुत्तमम् ॥ ९७ ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमांशिकम् ।
प्रयुङ्क्ते यः पयश्चानु नित्यवेगः स ना भवेत् ॥ ९८ ॥
घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा ।
सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥ ९९ ॥
कृतैककृत्याः सिद्धार्था ये चान्योन्यानुवर्तिनः ।
कलासु बाह्या ये तुल्याः सत्त्वेन वयसा च ये ॥ १०० ॥
कुलमाहात्म्यदाक्षिण्यशीलशौचसमन्विताः ।

ये कामनित्या ये हृष्टा ये विशोका गतव्यथाः ॥ १०१ ॥
ये तुल्यशीला ये भुक्त्वा ये प्रिया ये प्रियंवदाः ।
तैर्नरः सह विश्रब्धः सुवयस्यैर्वृषायते ॥ १०२ ॥
अभ्यङ्गोत्सादनस्नानगन्धमाल्यविभूषणैः ।
गृहशय्यासनसुखैर्वासोभिरहतैः प्रियैः ॥ १०३ ॥
विहङ्गानां रुतैरिष्टैः स्त्रीणां चाभरणस्वनैः ।
संसाहनैर्वरस्त्रीणामिष्टानां च वृषायते ॥ १०४ ॥
मत्तद्विरेफाचरिताः सपद्माः सलिलाशयाः ।
जात्युत्पलसुगन्धीनि शीतगर्भगृहाणि च ॥ १०५ ॥
नद्यः फेनोत्तरीयाश्च गिरयो नीलसानवः ।
उन्नतिर्नीलमेघानां रम्यचन्द्रोदया निशाः ॥ १०६ ॥
वायवः सुखसंस्पर्शाः कुमुदाकारगन्धिनः ।
रतिभोगक्षमा रात्र्यः संकोचा गुरुवल्लभाः ॥ १०७ ॥

सुखाः सहायाः परपुष्टपुष्टाः फुल्ला वनान्ता विशदान्नपानाः ।
गान्धर्वशब्दाश्च सुगन्धमाल्याः सत्त्वं विशालं निरुपद्रवं च॥१०८॥
सिद्धार्थता चाभिनवश्च कामः स्त्री चायुधं सर्वमिहात्मजस्य ।
वयो नवं जातमदश्च कालो हर्षस्य योनिः परमा नराणाम् ॥१०९॥

भवति चात्र ।

प्रहर्षयोनयो योगा व्याख्याता दश पञ्च च ।
माषपर्णतृतीयेऽस्मिन्पादे शुक्रबलप्रदाः ॥ ११० ॥

इति माषपर्णनामतृतीयो वाजीकरणपादः ।

---

अथातः पुमाञ्जातबलादिकं चतुर्थं वाजीकरणपादं व्याख्यास्यामः । इति ह स्माह भगवानात्रेयः ।

"पुमान्यथा जातबलो यावदिच्छं स्त्रियो व्रजेत् ।
यथा चापत्यवान्सद्यो भवेत्तदुपदेक्ष्यते ॥ १११ ॥
न हि जातबलाः सर्वे नराश्चापत्यभागिनः ।
बृहच्छरीरा बलिनः सन्ति नारीषु दुर्बलाः ॥ ११२ ॥

अजगन्धाकषायेण सौवीरकतुषोदके ।
सुराकाम्पिल्लके योगा लोध्रवच्च तयोः स्मृताः ॥ ३६ ॥"

भवन्ति चात्र ।

दध्यादिषु त्रयः पञ्च प्रियालाद्यैस्त्रयो रसे ।
स्नेहेषु वै त्रयो लेहाः षट् चूर्णं त्वेक एव च ॥ ३७ ॥
इक्षावेकस्तथा मुद्गमांसानां च रसास्त्रयः ।
यवाग्वादौ त्रयश्चैव उक्त उत्कारिकाविधौ ॥ ३८ ॥
एकश्च मोदके मद्ये चैकं तत्क्वाथतैलके ।
चूर्णमेकं पुनश्चैको मोदकः पञ्च चासवे ॥ ३९ ॥
एकः सौवीरकेऽथैकयोगः स्यात्तु तुषोदके ।
एका सुरा कम्पिल्लके चैकः पञ्च घृते स्मृताः ॥ ४० ॥
दन्तीद्रवन्तीकल्पेऽस्मिन्प्रोक्ताः षोडशकास्त्रयः ।
नानाविधानां योगानां भुक्तिदोषामयान्प्रति ॥ ४१ ॥
त्रिशतं पञ्चपञ्चाशद्योगानां वमने स्मृतम् ।
द्वे शते नवकाः पञ्च योगानां तु विरेचने ॥ ४२ ॥
ऊर्ध्वानुलोमभागानामित्युक्तानि शतानि षट् ।
प्राधान्यतः समाश्रित्य द्रव्याणि दश पञ्च च ॥ ४३ ॥
यद्धि येन प्रधानेन द्रव्यं समुपसृज्यते ।
तत्संज्ञकः स संयोगो भवतीति विनिश्चितम् ॥ ४४ ॥
फलादीनां प्रधानानां गुणभूताः सुरादयः ।
ते हितान्यनुवर्तन्ते मनुजेन्द्रमिवेतरे ॥ ४५ ॥
"विरुद्धवीर्यमप्येषां प्रधानानामबाधकम् ।
समानवीर्यं त्वधिकं क्रियासामान्यमिष्यते ॥ ४६ ॥
इष्टवर्णरसस्पर्शगन्धार्थं प्रति चामयम् ।
अतो विरुद्धवीर्याणां प्रयोग इति निश्चितम् ॥ ४७ ॥
भूयश्चैषां बलाधानं कार्यं स्वरसभावनैः ।
सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहुकर्मकृत् ।
स्वरसैस्तुल्यवीर्यैर्वा तस्माद्द्रव्याणि भावयेत् ॥ ४८ ॥

अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ।
कुर्यात्संयोगविश्लेषकालसंस्कारयुक्तिभिः ॥ ४९ ॥
प्रदेशमात्रमेतावद्द्रष्टव्यमिह षट्शतम् ।
स्वबुद्ध्यैवं सहस्राणि कोटीर्वापि प्रकल्पयेत् ॥ ५० ॥
बहुद्रव्यविकल्पत्वाद्योगसंख्या न विद्यते ।
तीक्ष्णमध्यमृदूनां तु तेषां शृणुत लक्षणम् ॥ ५१ ॥
सुखं क्षिप्रं महावेगमसक्तं यत्प्रवर्तते ।
नातिग्लानिकरं पायौ हृदये न च रुक्करम् ॥ ५२ ॥
अन्नाशयमनुक्षिण्वन्कृत्स्नं दोषं निरस्यति ।
विरेचनं निरूहो वा तत्तीक्ष्णमिति निर्दिशेत् ॥ ५३ ॥
जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम् ।
ईषन्मात्राधिकैर्युक्तं तुल्यवीर्यैः सुभावितम् ।
स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम् ॥ ५४ ॥
किञ्चिदेभिर्गुणैर्हीनं पूर्वोक्तैर्मात्रया तथा ।
स्निग्धस्विन्नस्य वा सम्यङ्मध्यं भवति भेषजम् ॥ ५५ ॥
मन्दवीर्यं विरूक्षस्य हीनमात्रं तु भेषजम् ।
अतुल्यवीर्यैः संयुक्तं मृदु स्यान्मन्दवेगवत् ॥ ५६ ॥
अकृत्स्नदोषहरणादशुद्धं तद्बलीयसाम् ।
मध्यावरबलानां तु प्रयोज्यं सिद्धिमिच्छता ॥ ५७ ॥
तीक्ष्णो मध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः ।
तीक्ष्णादीनि बलापेक्षी भेषजान्येषु योजयेत् ॥ ५८ ॥
देयं त्वनिर्हृते पूर्वं पीते पश्चात्पुनः पुनः ।
भेषजं वमनार्थाय प्राय आपित्तदर्शनात् ॥ ५९ ॥
बलं त्रैविध्यमालक्ष्य दोषाणामातुरस्य च ।
पुनः प्रदद्याद्भेषज्यं सर्वशो वा विवर्जयेत् ॥ ६० ॥
निर्हृते वापि जीर्णे वा दोषनिर्हरणे बुधः ।
भेषजेऽन्यत्प्रयुञ्जीत प्रार्थयन्सिद्धिमुत्तमाम् ॥ ६१ ॥
अपक्वं वमनं दोषात्पच्यमानं विरेचनम् ।
निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ॥ ६२ ॥

पीते प्रस्रंसने दोषान्न निर्हृत्य जरां गते ।
वमिते चौषधे धीरः पाययेदातुरं पुनः ॥ ६३ ॥
दीप्ताग्निं बहुदोषं च दृढस्नेहगुणं नरम् ।
दुःशोध्यं तदहर्भुक्तं श्वो भूयः पाययेत्पुनः ॥ ६४ ॥
दुर्बलो बहुदोषश्च दोषपाकेण यो नरः ।
विरिच्यते रसैर्भोज्यैर्भूयस्तमनुसारयेत् ॥ ६५ ॥
वमनैश्च विरेकैश्च विशुद्धस्याप्रमाणतः ।
भोजनान्तरपानाभ्यां दोषशेषं शमं नयेत् ॥ ६६ ॥
दुर्बलं शोधितं पूर्वमल्पदोषं च मानवम् ।
अपरिज्ञातकोष्ठं च पाययेदौषधं मृदु ॥ ६७ ॥
श्रेयो मृद्वसकृत्पीतमल्पबाधं निरत्ययम् ।
न चातितीक्ष्णं यत्क्षिप्रं जनयेत्प्राणसंशयम् ॥ ६८ ॥
दुर्बलोऽपि महादोषो विरेच्यो बहुशोऽल्पशः ।
मृदुभिर्भेषजैर्दोषा हन्युर्ह्येनमनिर्हृताः ॥ ६९ ॥
यस्योर्ध्वं कफसंसृष्टं पीतं यात्यनुलोमिकम् ।
वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम् ॥ ७० ॥
विबन्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलम् ।
तेनाध्मानं सतृट्छर्दिर्विबन्धश्चैव शाम्यति ॥ ७१ ॥
भेषजं दोषरुद्धं चेन्नोर्ध्वं नाधः प्रवर्तते ।
सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत् ॥ ७२ ॥
सुविरिक्तस्तु सोद्गारमाश्वेवौषधमुल्लिखेत् ।
अतिप्रवर्तनं जीर्णे सुशीतैः स्तम्भयेद्भिषक् ॥ ७३ ॥
कदाचिच्छ्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम् ।
क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत्प्रवर्तते ॥ ७४ ॥
विरूक्षानाहयोर्जीर्णे विष्टभ्योर्ध्वं गतेऽपि वा ।
वायुना भेषजे त्वन्यत्सस्नेहलवणं पिबेत् ॥ ७५ ॥
तृण्मोहभ्रममूर्च्छाद्याः स्युश्चेज्जीर्यति भेषजे ।
पित्तघ्नं स्वादु शीतं च भेषजं तत्र शस्यते ॥ ७६ ॥

लालाहृल्लासविष्टम्भलोमहर्षाः कफावृते ।
भेषजं तत्र तीक्ष्णोष्णं कट्वादिकफनुद्धितम् ॥ ७७ ॥
सुस्निग्धं क्रूरकोष्ठं च लङ्घयेदविरेचितम् ।
तेनास्य स्नेहजः श्लेष्मा सङ्गश्चैवोपशाम्यति ॥ ७८ ॥
रूक्षबह्वनिलक्रूरकोष्ठव्यायामशूलिनाम् ।
दीप्ताग्नीनां च भेषज्यमविरिच्यैव जीर्यति ॥ ७९ ॥
तेभ्यो बस्तिं पुरा दत्त्वा पश्चाद्द्याद्विरेचनम् ।
बस्तिप्रवर्तितं दोषं हरेच्छीघ्रं विरेचनम् ॥ ८० ॥
रूक्षाशनाः कर्मनित्या ये नरा दीप्तपावकाः ।
तेषां दोषाः क्षयं यान्ति कर्मवातातपाग्निभिः ॥ ८१ ॥
विरुद्धाध्यशनाजीर्णान् दोषानपि जयन्ति ते ।
स्नेह्यास्ते मारुताद्रक्ष्या नाव्याधौ तान्विशोधयेत् ॥ ८२ ॥
नातिस्निग्धशरीराय दद्यात्स्नेहविरेचनम् ।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम् ॥ ८३ ॥
एवं ज्ञात्वा विधिं धीरो देशकालप्रमाणवित् ।
विरेचनं विरेच्येभ्यः प्रयच्छन्नापराध्यति ॥ ८४ ॥
विभ्रंशो विषवद्यस्य सम्यग्योगो यथामृतम् ।
कालेष्ववश्यं पेयं च तस्माद्यत्नात्प्रयोजयेत् ॥ ८५ ॥
द्रव्यप्रमाणं तु यदुक्तमस्मिन्मध्येषु तत्कोष्ठवयोबलेषु ।
तन्मूलमालम्ब्य भवेद्विकल्प्यं तेषां विकल्पोऽभ्यधिकोनभावः॥८६॥
षड्वंश्यस्तु मरीचिः स्यात्षण्मरीच्यस्तु सर्षपः ।
अष्टौ ते सर्षपा रक्तिस्तण्डुलश्चापि तद्द्वयम् ॥ ८७ ॥
धान्यमाषो भवेदेको धान्यमाषद्वयं यवः ।
अण्डकास्ते तु चत्वारस्ताश्चतस्रस्तु माषकः ॥ ८८ ॥
हेमश्च धानकश्चोक्तो भवेच्छाणं तु ते त्रयः ।
शाणौ द्वौ द्रङ्क्षणं विद्यात्कोलं बदरमेव च ॥ ८९ ॥
विद्याद्द्वौ द्रङ्क्षणौ कर्षं सुवर्णं चाक्षमेव च ।
बिडालपदकं तच्च पिचुं पाणितलं तथा ॥ ९० ॥

तिन्दुकं च विजानीयात्कवलग्रहमेव च ।
द्वे सुवर्णे पलार्धं स्याच्छुक्तिरष्टमिका तथा ॥ ९१ ॥
द्वे पलार्धे पलं मुष्टिः प्रकुञ्चोऽथ चतुर्थिका ।
बिल्वं षोडशिकं चाम्रं द्वे पले प्रसृतं विदुः ॥ ९२ ॥
अष्टमानं तु विज्ञेयं कुडवौ द्वौ तु मानिका ।
पलं चतुर्गुणं विद्यादञ्जलिं कुडवं तथा ॥ ९३ ॥
चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ।
पात्रं तदेव विज्ञेयं कंसः प्रस्थाष्टकं तथा ॥ ९४ ॥
कंसश्चतुर्गुणो द्रोणश्चार्मणं नल्वनं च तत् ।
स एव कलशः ख्यातो घटमुन्मानमेव च ॥ ९५ ॥
घटं तु द्विगुणं शूर्पो विज्ञेयः कुम्भ एव च ।
गोणीं शूर्पद्वयं विद्यात्खारीं भारीं तथैव च ॥ ९६ ॥
द्वात्रिंशच्चैव जानीयाद्वाहं शूर्पाणि बुद्धिमान् ।
तुलां शतपलं विद्यात्परिमाणविशारदः ॥ ९७ ॥
शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्तितम् ।
द्विगुणं तद्द्रवेष्विष्टं तथा सद्योद्धृतेषु च ॥ ९८ ॥
यद्धि मानं तुला प्रोक्ता पलं वा तत्प्रयोजयेत् ।
अनुक्ते परिमाणे तु तुल्यं मानं प्रकीर्तितम् ॥ ९९ ॥
द्रवकार्येऽपि चानुक्ते सर्वत्र सलिलं स्मृतम् ।
यतश्च पादनिर्देशश्चतुर्भागस्ततश्च सः ॥ १०० ॥
जलस्नेहौषधानां तु प्रमाणं यत्र नेरितम् ।
तत्र स्यादौषधात्स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥ १०१ ॥
स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा ।
तुल्ये कल्केन निर्यासे भेषजानां मृदुः स्मृतः ॥ १०२ ॥
शम्पाक इव निर्यासे मध्यो दर्वीं विमुञ्चति ।
शीर्यमाणे तु निर्यासे वर्तमाने खरस्तथा ॥ १०३ ॥
खरोऽभ्यङ्गे स्मृतः पाको मृदुर्नस्तःक्रियासु च ।
[illegible] विनियोजयेत् ॥ १०४ ॥

मानं च द्विविधं प्राहुः कालिङ्गं मागधं तथा ।
कालिङ्गान्मागधं श्रेष्ठमेवं मानविदो विदुः ॥ १०५ ॥"

तत्र श्लोकौ ।

कल्पार्थः शोधनं संज्ञा पृथग्घेतुः प्रवर्तते ।
देशादीनां फलादीनां गुणा योगाः शतानि षट् ॥ १०६ ॥
विकल्पहेतुर्नामानि तीक्ष्णमध्याल्पलक्षणम् ।
विधिश्चावस्थिको मानं स्नेहपाकश्च दर्शितः ॥ १०७ ॥

इति चरकसंहितायां कल्पस्थाने द्वादशोऽध्यायः ॥ १२ ॥

इति सप्तमं कल्पस्थानं समाप्तम् ।

---

# सिद्धिस्थानम्।

## प्रथमोऽध्यायः।

### कल्पनासिद्धिः।

अथातः कल्पनासिद्धिं व्याख्यास्याम इति ह स्माह भगवान् आत्रेयः।

का कल्पना पञ्चसु कर्मसूक्ता क्रमश्च कः किं च कृताकृतेषु।
लिङ्गं तथैवातिकृतेषु सङ्ख्या का किं गुणाः केषु च का च बस्तिः॥१॥
किं वर्जनीयं प्रतिकर्मकाले कृते कियान्वा परिहारकालः।
प्रणीयमानश्च न याति बस्तिः केनैति शीघ्रं सुचिराच्च केन॥ २॥
साध्या गदाः स्वैः शमनैश्च केचित्कस्मात्प्रयुक्तैर्न शमं व्रजन्ति।
प्रचोदितः शिष्यवरेण सम्यगित्यग्निवेशेन भिषग्वरिष्ठः॥ ३॥
पुनर्वसुस्तत्रविदाह तस्मै सर्वप्रजानां हितकाम्ययेदम्।
"त्र्यहावरं सप्तदिनं परंतु स्निग्धो नरः स्वेदयितव्य इष्टः।
नातःपरं स्नेहनमादिशन्ति सात्म्यी भवेत्सप्तदिनात्परं तु॥ ४॥
स्नेहोऽनिलं हन्ति मृदुं करोति देहं मलानां विनिहन्ति सङ्गम्।
स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम्॥ ५॥
ग्राम्यौदकानूपरसैः समांसैरुत्क्लेशनीयः पयसा च रम्यः।
रसैस्तथा जाङ्गलजैः सयूषैः स्निग्धः कफावृद्धिकरैर्विरेच्यः॥ ६॥
श्लेष्मोत्तरश्छर्दयति ह्यदुःखं विरिच्यते मन्दकफस्तु सम्यक्।
अधः कफेऽल्पे वमनं हि गच्छेद्विरेचनं वृद्धकफे तथोर्ध्वम्॥ ७॥
स्निग्धाय देयं वमनं यथोक्तं वान्तस्य पेयादिरनुक्रमश्च।
स्निग्धस्य सुस्विन्नतनोर्यथावद्विरेचनं योग्यतमं प्रयोज्यम्॥ ८॥
पेयां विलेपीमकृतं कृतं च यूषं रसं त्रिर्द्विरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः॥ ९॥

यथानुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण ।
महान्स्थिरः सर्वसहस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः ॥ १० ॥
जघन्यमध्यप्रवरेषु वेगाश्चत्वार इष्टा वमने षडष्टौ ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥ ११ ॥
पित्तान्तमिष्टं वमनं तथोर्ध्वमधःकफान्तं च विरेकमाहुः ।
द्वित्रीन् सविट्कानपनीय वेगान्मेयं विरेके वमने तु पीतम् ॥१२॥
क्रमात्कफः पित्तमथानिलश्च यस्येति सम्यग्वमितः स इष्टः ।
हृत्पार्श्वमूर्धेन्द्रियमार्गशुद्धौ तथा लघुत्वेऽपि च लक्ष्यमाणे ॥ १३ ॥
दुश्छर्दिते स्फोटककोठकण्डूहृत्खाविशुद्धिर्गुरुगात्रता च ।
तृण्मोहमूर्च्छानिलकोपनिद्राबलातिहानिर्वमनेऽति च स्यात् ॥१४॥
स्रोतोविशुद्धीन्द्रियसंप्रसादौ लघुत्वमूर्जोऽग्निरनामयत्वम् ।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत्क्रमेण ॥१५॥
स्याच्छ्लेष्मपित्तानिलसंप्रकोपः सादस्तथाग्नेर्गुरुता प्रतिश्या ।
तन्द्रा तथा छर्दिररोचकश्च वातानुलोम्यं न च दुर्विरिक्ते ॥ १६ ॥
कफास्रपित्तक्षयजानिलोत्थाः सुप्त्यङ्गमर्दक्लमवेपनाद्याः ।
निद्राबलाभावतमः प्रवेशः सोन्मादहिक्काश्च विरेचितेऽति ॥ १७ ॥
संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वा ।
दद्यात्र्यहान्नानि बुभुक्षिताय तैलाक्तगात्राय ततो निरूहम् ॥ १८॥
प्रत्यागते मांसरसेन भोज्यः समीक्ष्य वा दोषबलं यथार्हम् ।
नरस्ततो निश्यनुवासनार्हो नित्याशितः स्यादनुवासनीयः ॥ १९ ॥
शीते वसन्ते च दिवानुवास्यो रात्रौ शरद्ग्रीष्मघनागमेषु ।
तानेव दोषान्परिरक्षता ये स्नेहस्य पाने परिकीर्तिताः प्राक् ॥२०॥
प्रत्यागते चाप्यनुवासनीये दिवा प्रदेयं व्युषिताय भोज्यम् ।
सायं च भोज्यं परतस्त्र्यहे वा त्र्यहेऽनुवास्योऽहनि पञ्चमे वा ॥२१॥
त्र्यहे द्व्यहे वाप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनं च ।
एकं तथा त्रीन्कफजे विकारे पित्तात्मके पञ्च तु सप्त वापि ॥ २२ ॥
वातेन चैकादश वा पुनर्वा बस्ती न युग्मान्कुशलो विदध्यात् ।
विरिक्तस्तु निरूहदानं विवर्जयेत्सप्तदिनान्यवश्यम् ॥ २३ ॥

शुद्धो विरेकेण निरूहदानं तद्ध्यस्य शून्यं विकृषेच्छरीरम् ।
बस्तिर्वयःस्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृच्च ॥ २४ ॥
सर्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्वगदापहश्च ।
विट्श्लेष्ममूत्रानिलपित्तकर्षी स्थिरत्वकृच्छुक्रबलप्रदश्च ॥ २५ ॥
विष्वक्स्थितं दोषचयं निरस्य सर्वान्विकारान् शमयेन्निरूहः ।
देहे निरूहेण विशुद्धमार्गे संस्नेहनं वर्णबलप्रदं च ॥ २६ ॥
न तैलदानात्परमस्ति किञ्चिद्द्रव्यं विशेषेण समीरणार्ते ।
स्नेहाद्धि रौक्ष्यं लघुतां गुरुत्वादौष्ण्याच्च शैत्यं पवनस्य हत्वा ॥२७॥
तैलं दधत्याशु मनःप्रसादं वीर्यं बलं वर्णमथाग्निपुष्टिम् ।
मूले निषिक्ते हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवाग्रः ॥२८॥
काले महान्पुष्पफलप्रदश्च तथा नरः स्यादनुवासनेन ।
अपत्यसन्तानविवृद्धकारी काले यशस्वी बहुकीर्तिमांश्च ॥ २९ ॥
स्तब्धाश्च ये संकुचिताश्च येऽपि ये पङ्गवो येऽपि च रुग्णभग्नाः ।
येषां च शाखासु चरन्ति वाताः शस्तो विशेषेण हि तेषु बस्तिः ३०
आध्मापने विग्रथिते पुरीषे शूले च भक्तानभिनन्दने च ।
एवंप्रकाराश्च भवन्ति कुक्षौ ये चामयास्तेषु च बस्तिरिष्टः ॥ ३१ ॥
याश्च स्त्रियो वातकृतोपसर्गाद्गर्भं न गृह्णन्ति नृभिः समेताः ।
क्षीणेन्द्रिया ये च नराः कृशाश्च तेषां च बस्तिः परमः प्रदिष्टः ॥३२
उष्णाभिभूतेषु वदन्ति शीतान् शीताभिभूतेषु तथा सुखोष्णान् ।
तत्प्रत्यनीकौषधसंप्रयुक्तान्सर्वत्र बस्तीन् प्रविभज्य युञ्ज्यात् ॥३३॥
न बृंहणीतान्विदधीत बस्तीन्विशोधनीयेषु गदेषु वैद्यः ।
कुष्ठप्रमेहादिषु मेदुरेषु नरेषु ये चापि विशोधनीयाः ॥ ३४ ॥
क्षीणक्षतानां न विशोधनीयान्न शोषिणां नो भृशदुर्बलानाम् ।
न मूर्च्छितानां च न शोधितानां येषां च दोषेषु निबद्धवायुः ॥३५॥
शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ॥३६॥
विण्मूत्रपित्तादिमलाशयानां विक्षेपसंहारकरः स यस्मात् ।

तस्माच्चिकित्सार्धमिति ब्रुवन्ति सर्वां चिकित्सामपि बस्तिमेके ।
नाभिप्रदेशं च कटीं च गत्वा कुक्षिं समालोड्य पुनश्च पार्श्वम्॥३८॥
संस्नेह्य कायं क्षिथिलांश्च कृत्वा दोषान्पुरीषं ग्रथितं विमथ्य ।
संसक्तवेगः सपुरीषदोषः प्रत्यागतो बस्तिरिति प्रशस्तः ॥ ३९ ॥
प्रसृष्टविण्मूत्रसमीरणत्वं रुच्यग्निवृद्ध्याशयलाघवानि ।
रोगोपशान्तिः प्रकृतिस्थता च बलं च तत्स्यात्सुनिरूढलिङ्गम्॥४०॥
स्याद्रुक्शिरोहृद्गुदकुक्षिलिङ्गे शोफः प्रतिश्यायविकर्तिके च ।
हृल्लासिका मारुतमूत्रसङ्गः श्वासो न सम्यक् च निरूहिते स्यात्॥४१॥
लिङ्गं यदेवातिविरेचितस्य भवेत्तदेवातिनिरूहितस्य ।
प्रत्येत्य सक्तं सशकृच्च तैलं वक्रादिबुद्धीन्द्रियसंप्रसादः ॥ ४२ ॥
स्वप्नानुवृत्तिर्लघुता बलं च सृष्टाश्च वेगाः स्वनुवासिते स्युः ।
अधःशरीरोदरबाहुपृष्ठपार्श्वेषु रुग्रूक्षखरं च गात्रम् ॥ ४३ ॥
ग्रहश्च विण्मूत्रसमीरणानामसम्यगेतान्यनुवासिते स्युः ।
हृल्लासमोहक्लमसादमूर्च्छा विकर्तिका चाप्यनुवासिते स्युः ॥ ४४ ॥
यस्येह यामाननुवर्तते त्रीन्स्नेहान्नरः स्यात्स विशुद्धदेहः ।
आश्वागतेऽन्यस्तु पुनर्विधेयः स्नेहो न संस्नेहयति ह्यतिष्ठन् ॥४५॥
त्रिंशत्स्मृताः कर्मसु बस्तयो हि कालस्ततोऽर्धेन ततश्च योगः ।
सान्वासना द्वादश वै निरूहाः प्राक्स्नेह एकः परतश्च पञ्च ॥४६॥
काले त्रयोऽन्तः पुरतस्तथैकः स्नेहा निरूहान्तरिताश्च षट्सु ।
योगे निरूहास्त्रय एव देयाः स्नेहाश्च पञ्चैव परादिमध्याः ॥ ४७ ॥
त्रीन्पञ्च वाहुश्चतुरोऽथ षड्वा वाताधिकेभ्यस्त्वनुवासनीयान् ।
स्नेहान्प्रदायाशु भिषग्विदध्यात्स्रोतोविशुद्ध्यर्थमतो निरूहान् ॥४८॥
विशुद्धकायस्य ततः क्रमेण स्निग्धं तु तैः स्वेदितमुत्तमाङ्गम् ।
विरेचयेत्त्रिर्द्विरथैकशो वा बलं समीक्ष्य त्रिविधं मलानाम् ॥ ४९ ॥
उरःशिरोलाघवमिन्द्रियाणां स्रोतोविशुद्धिश्च भवेद्विशुद्धे ।
गलोपलेपः शिरसो गुरुत्वं निष्ठीवनं चाप्यथ दुर्विरिक्ते ॥ ५० ॥
शिरोऽक्षिशङ्खश्रवणार्तितोदश्चात्यर्थशुद्धेस्तिमिरं च पश्येत् ।
[illegible]र्पणं तत्र मृदु द्रवं च स्निग्धस्य तीक्ष्णं तु पुनर्न योगे ॥ ५१॥

ातुरस्वस्थविधिः प्रयोगे बलायुषोर्वृद्धिकृदामयघ्नः।
लस्तु बस्त्यादिषु याति यावांस्तावान्भवेद्धिःपरिहारकालः ॥५२॥
याशनस्थानवचांसि यानं स्वप्नं दिवा मैथुनवेगरोधान्।
तोपचारातपशोकरोषांस्त्यजेदकालाहितभोजनं च ॥ ५३ ॥
प्रणीते विषमे च नेत्रे मार्गे तथार्शःकफविड्विबन्धे।
याति बस्तिं न सुखं निरेति दोषावृतोऽल्पो यदि वाल्पवीर्यः॥५४॥
े तु वर्चोऽनिलमूत्रवेगे वाते विवृद्धेऽल्पबले गुदे वा।
युष्णतीक्ष्णश्च मृदौ प्रकोष्ठे प्रणीतमात्रः पुनरेति बस्तिः ॥ ५५ ॥
ःकफाभ्यामनिलो निरुद्धः शूलाङ्गसुप्तिश्वयथून् करोति।
तु युञ्जन्नबुधस्तु तस्मै संवर्धयत्येव हि तान्विकारान् ॥ ५६ ॥
ास्तथान्येऽप्यवितर्क्यमाणाः परस्परेणावगृहीतमार्गाः।
दूषिता धातुभिरेव चान्यैः स्वैर्भेषजैर्नोपशमं व्रजन्ति ॥ ५७ ॥
च रोगप्रशमाय कर्म हीनातिमात्रं विपरीतकालम्।
योपचाराच्च न तं विकारं शान्तिं नयेत्पथ्यमपि प्रयुक्तम् ॥५८॥"

तत्र श्लोकः।

निमान्द्वादश पञ्चकर्माण्युद्दिश्य सिद्धाविह कल्कनायाम्।
हितार्थं भगवान्महार्थान्सम्यग् जगादर्षिवरोऽत्रिपुत्रः ॥ ५९ ॥

इति चरकसंहितायां सिद्धिस्थाने प्रथमोऽध्यायः।

---

# द्वितीयोऽध्यायः।

## पञ्चकर्मीयसिद्धिः।

येषां यस्माच्च कर्माण्यग्निवेश ! न कारयेत्।
येषां च कारयेद्यानि तत्सर्वं संप्रवक्ष्यते ॥ १ ॥
"चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च।
सद्वैद्यनृपतिद्वेष्टा तद्द्विष्टः शोकपीडितः ॥ २ ॥
साहसिको मुमूर्षश्च विहीनः करणैश्च यः।
वैरी वैद्याभिमानी च श्रद्धाहीनः सशङ्कितः ॥ ३ ॥

भिषजामविधेयश्च नोपक्रम्यो भिषग्विदा ।
एतानुपचरन्वैद्यो बहून्दोषानवाप्नयात् ॥ ४ ॥
एभ्योऽन्ये समुपक्रम्या नराः सर्वैरुपक्रमैः ।
अवस्थां प्रविभज्यैषां वर्ज्यं कार्यं च वक्ष्यते ॥ ५ ॥

अच्छर्दनीयास्तावत्क्षतक्षीणाति-स्थूलकृश-बालवृद्धदुर्बलश्रान्त-पिपासित-क्षुधितकर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्त-क्षामगर्भिणी सुकुमार-संवृतकोष्ठ-दुच्छर्दनोर्ध्वरक्त-पित्त-प्रसक्तच्छर्द्यूर्ध्व-वातास्थापितानुवासित-हृद्रोगोदावर्तमूत्राघातप्लीहगुल्मोदराष्ठीलास्वरोपघाततिमिरशिरःशङ्खकर्णाक्षिपार्श्वशूलार्ताः ॥ ६ ॥

तत्र क्षतस्य च भूयः क्षणनाद्रक्तातिप्रवृत्तिः स्यात् । क्षीणातिस्थूल-कृशबालवृद्धदुर्बलानामौषधैर्बलासहत्वात्प्राणोपरोधः । श्रान्तपिपासितक्षुधितानां च तद्वत् । कर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्तक्षामाणां रौक्ष्याद्वातरक्तच्छेदक्षतभयं स्यात् । गर्भिण्या गर्भव्यायामादामगर्भभ्रंशाच्च दारुणा रोगप्राप्तिः । सुकुमारस्य हृदयस्य विकर्षणादूर्ध्वमधो वा रुधिरातिप्रवृत्तिः । संवृतकोष्ठदुश्छर्दनयोरतिमात्रप्रवाहनाद्दोषाः समुत्क्लिष्टा ह्यन्तःकोष्ठे जनयन्त्यन्तर्विसर्पं स्तम्भं जाड्यं वैचित्यं मरणं वा । ऊर्ध्वरक्तपित्तस्य उदानं उत्क्षिप्य प्राणान् हरेद्रक्तं चातिप्रवर्तयेत् । प्रसक्तच्छर्देस्तु तद्वदूर्ध्ववातास्थापितानुवासितानामूर्ध्वं वातातिप्रवृत्तिः । हृद्रोगिणो हृदयोपरोधः । उदावर्तिनो घोरतर उदावर्तः स्यात् शीघ्रतरहन्ता । मूत्रघातादिभिरार्तानां तीव्रतरः शूलप्रादुर्भावः । तिमिराणां तिमिरातिवृद्धिः । शिरःशूलादिषु शूलातिवृद्धिः । तस्मादेते न वाम्याः ॥ ७ ॥

सर्वेष्वपि खलु एतेष्वपि विषगरविरुद्धाभ्यवहारामकृतेषु अप्रतिसिद्धं शीघ्रकारित्वाद् दोषाणामिति ॥ ८ ॥

शेषास्तु वाम्याः । पीनसकुष्ठनवज्वरराजयक्ष्मकासश्वासगलग्रहगलगण्डश्लीपद-मेह-मन्दाग्निविरुद्धाजीर्णान्नविसूचिकालसकविषपीतदष्टदिग्धविद्धाधःशोणितपित्तकफप्रसेकदुर्नामहृल्लासारोचका-

विपाकापच्यपस्मारोन्मादातिसारशोषपाण्डुरोगमुखपाकदुष्टस्तन्यादयः श्लेष्मव्याधयो विशेषेण रोगाध्यायोक्ताश्च तेषु हि वमनं प्रधानतममित्युक्तं केदारसेतुभेदे शाल्यादिशोषदोषविनाशवत् ॥ ९ ॥

अविरेच्यास्तु सुभगक्षतगुदमुक्तनालाधोभागरक्तपित्तविलङ्घितदुर्बलेन्द्रियाल्पाग्नि-निरूढ-कामादि-व्यग्राजीर्ण-नवज्वर-मदात्ययिताध्मातशल्यार्दिताभिहतातिस्निग्धरूक्षदारुणकोष्ठाः क्षतादयश्च गर्भिण्यन्ताः ॥ १० ॥

तत्र सुभगस्य सुकुमारोक्तो वमनदोषः स्यात् । क्षतगुदस्य क्षते गुदे वायुः प्राणोपरोधकरीं वरां रुजां जनयेत् । मुक्तनालमतिप्रवृत्त्या हन्यात् । अधोभागरक्तपित्तिनां च तद्वदेव । विलङ्घितदुर्बलेन्द्रियाल्पाग्निनिरूढा औषधवेगं न ते सहेरन् । कामादिव्यग्रमनसो न प्रवर्तते कृच्छ्रेण वा प्रवर्तमानमयोगदोषान् कुर्यात् अजीर्णिन आमदोषः स्यात् । नवज्वरस्य अविपक्वान् दोषान् न निर्हरेत् वातमेव च कोपयेत् । मदात्ययितस्य मद्यक्षीणे देहे वायुः प्राणोपरोधं कुर्यात् । आध्मातस्य आध्मायमानस्य वा पुरीषकोष्ठनिचितो वायुर्विसर्पन् सहसा आनाहं तीव्रतरं मरणं वा जनयेत् । शल्यार्दिताभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात् । अतिस्निग्धस्य अतियोगभयं भवेत् । रूक्षस्य वायुरङ्गग्रहं कुर्यात् । दारुणकोष्ठस्य विरेचनोद्धता दोषा हृच्छूलपर्वभेदानाहाङ्गमर्दच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः । क्षतादीनां गर्भिण्यन्तानां छर्दनोक्तो दोषः स्यात् । तस्मादेते न विरेच्याः ॥ ११ ॥

शेषास्तु विरेच्याः । कुष्ठज्वरमेहोर्ध्वरक्तपित्तभगंदरोदरार्शोब्रध्नप्लीहगुल्मार्बुदगलगण्डग्रन्थिविसूचिकालसकमूत्राघातक्रिमिकोष्ठवीसर्पपाण्डुरोगशिरःपार्श्वशूलोदावर्तनेत्रास्यदाहहृद्रोगव्यङ्गनीलीकनेत्रनासिकास्यश्रवणरोगहलीमकश्वास-कासकामलापस्मारोन्माद-वातरक्त-योनि-रेतो-दोष-तैमिर्यारोचकाविपाक-च्छर्दिश्वयथूदरविस्फोटकादयः पित्तव्याधयो विशेषेण रोगाध्यायोक्ताश्च । एतेषु हि विरेचनं प्रधानतममित्युक्त[illegible] ॥ १२ ॥

अनास्थाप्यास्तु अजीर्ण्यतिस्निग्धपीतस्नेहोत्क्लिष्टदोषाल्पाग्नियानक्लान्तातिदुर्बलक्षुत्तृष्णाश्रमार्तातिकृशभुक्तभक्तपीतोदकवमितविरिक्तक्षतकृतनस्तःकर्मक्रुद्धभीतमत्तमूर्च्छितप्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्काबद्धच्छिद्रोदकोदराध्मातालसकविसूचिकामप्रजातिसारमधुमेहकुष्ठार्ताः ॥ १३ ॥

तत्र अजीर्ण्यतिस्निग्धपीतस्नेहानां दूष्योदरं मूर्च्छा श्वयथुर्वा स्यात् । उत्क्लिष्टदोषमन्दाग्न्योररोचकस्तीव्रः । यानक्लान्तस्य क्षोभव्यापन्नो बस्तिराशु देहं शोषयेत् । अतिदुर्बलक्षुत्तृष्णाश्रमार्तानां पूर्वोक्तो दोषः स्यात् । अतिकृशस्य कार्श्यं पुनर्जनयेत् । पीतोदकभुक्तभक्तयोरुत्क्लिश्योर्ध्वमधो वा वायुर्बस्तिमुत्क्षिप्य क्षिप्रं बस्तौ घोरान् विकारान् जनयेत् । वमितविरिक्तयोस्तु रूक्षशरीरं निरूहः क्षतं क्षार इव दहेत् । कृतनस्तःकर्मणो विभ्रंशं भृशसंरुद्धस्रोतसः कुर्यात् । क्रुद्धभीतयोर्बस्तिरूर्ध्वमुपप्लवेत् । मत्तमूर्च्छितयोर्भृशं विचलितायां संज्ञायां चित्तोपघातव्यापत्स्यात् । प्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्कार्तानामूर्ध्वीभूतो वायुरूर्ध्वं बस्तिं नयेत् । बद्धच्छिद्रोदकोदराध्मातानां भृशतरमाध्माप्य बस्तिः प्राणान् हिंस्यात् । अलसक-विसूचिकामप्रजातामातिसारिणामकृतदोषः स्यात् । मधुमेहकुष्ठिनोर्व्याधेः पुनर्वृद्धिस्तस्मादेते नास्थाप्याः ॥ १४ ॥

शेषास्त्वास्थाप्याः । सर्वाङ्गैकाङ्गकुक्षिरोगवातवर्चोमूत्रशुक्रसङ्गबलवर्ण-मांस-रेतःक्षय-दोषाध्मानाङ्गसुप्तिक्रिमिकोष्ठोदावर्तातिसारपर्वाभितापप्लीहगुल्महृद्रोग-भगन्दरोन्मादज्वर-ब्रध्नशिरःकर्णशूल-हृदय-पार्श्व-पृष्ठ-कटीग्रहवेपनाक्षेपक-गौरवातिलाघव-रजःक्षयार्ता विषमाग्निस्फिग्जानुजङ्घोरुगुल्फपार्ष्णिप्रपद-योनिबाह्वङ्गुलिस्तनाङ्ग-दन्तनखपर्वास्थि-शूलशोषस्तम्भान्त्रकूजनपरिकर्तिकादयः वातव्याधयो विशेषेण रोगाध्यायोक्ताश्च एतेषु आस्थापनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदवत् ॥ १५ ॥

य एवानास्थाप्याः त एव अननुवास्याः स्युः । विशेषतस्त्वभुक्तभक्त-नवज्वरपाण्डुरोगकामलाप्रमेहार्शःप्रतिश्यायारोचक-मन्दाग्निदु-

र्बलप्लीहकफोदरोरुस्तम्भवर्चोभेद-विषगरपीतकफाभिष्यन्दगुरुकोष्ठ-श्लीपदगलगण्डापचीक्रिमिकोष्ठिनः ॥ १६ ॥

तत्राभुक्तभक्तस्यानावृतमार्गत्वादूर्ध्वमतिवर्तते स्नेहः । नवज्वरपाण्डुरोगकामलाप्रमेहिणां दोषानुत्क्लेश्योदरं जनयेदर्शसस्य अर्शांस्यभिष्यन्द्याध्मानं कुर्यात् । अरोचकार्तस्य अन्नगृद्धिं पुनः हन्यात् । मन्दाग्निदुर्बलयोर्मन्दतरमग्निं कुर्यात् । प्रतिश्यायप्लीहादिमतां भृशं चोत्क्लिष्टदोषाणां भूय एव दोषं वर्धयेत्, तस्मादेते नानुवास्याः ॥ १७ ॥

य एवास्थाप्यास्त एवानुवास्याः । विशेषतस्तु रूक्षतीक्ष्णाग्नयः केवलवातरोगार्ताश्च । एतेषु ह्यनुवासनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदनवत्, मूले द्रुमसेकवच्च ॥ १८ ॥

अशिरोविरेचनार्हा अजीर्णिभुक्तभक्तपीतस्नेहमद्यतोयपातुकामास्नातशिराः स्नातुकामः क्षुत्तृष्णाश्रमार्तमत्तमूर्च्छितशस्त्रदण्डाहतव्यवायव्यायामपानक्लान्त-नवज्वरशोकाभितप्तविरिक्तानुवासितगर्भिणीनवप्रतिश्यायार्ता अनृतुदुर्दिने चेति ॥ १९ ॥

तत्राजीर्णिभुक्तभक्तयोर्दोष ऊर्ध्ववहानि स्रोतांस्यावृत्य कासश्वासच्छर्दिप्रतिश्यायान् जनयेत् । पीतस्नेहमद्यतोयपातुकामानां कृते च पिबतां मुखनासास्रावाक्ष्युपदेहतिमिरशिरोरोगान् जनयेत् । स्नातशिरसः कृते च स्नाने शिरसः प्रतिश्यायं क्षुधार्तस्य वातप्रकोपं तृष्णार्तस्य पुनस्तृष्णाभिवृद्धिं मुखशोषं च । श्रमार्तमत्तमूर्च्छितानामास्थापनोक्तो दोषः स्यात् । शस्त्रदण्डहतयोस्तीव्रतरां रुजं जनयेत् । व्यवायव्यायामक्लान्तानां शिरःस्कन्धनेत्रोरःपीडनम् । नवज्वरशोकाभितप्तयोरूष्मा नेत्रनाडीभिरनुसृत्य तिमिरं ज्वरवृद्धिं च कुर्यात् । विरिक्तस्य वायुरिन्द्रियोपघातं कुर्यात् । अनुवासितस्य कफः शिरोगुरुत्वं च कण्डूक्रिमिदोषान् जनयेत् । अन्तर्वत्न्या गर्भं स्तम्भयेत् । स काणः कुणिः पक्षहतः पीटसर्पी वा स्यात् । नवप्रतिश्यायार्तस्य स्रोतांसि व्यापादयेत् । अनृतुदुर्दिने शीतं पूतिनासिका शिरोरोगश्च स्यात् । तस्मादेते न शिरोविरेचनार्हाः ॥ २० ॥

शालूक-शुक्र-तिमिर-वर्त्मरोग-व्यङ्गो-पजिह्विका-र्धावभेदक-ग्रीवास्कन्धास्यनासिकाकर्णाक्षिमूर्धकपालशिरोरोगार्दितापतत्रकापतानक-गलगण्डदन्तशूलहर्षचालाक्षिरागार्बुदस्वरपरिपकाश्चैतेषु शिरोविरेचनं प्रधानतममित्युक्तम् । तद्ध्युत्तमाङ्गमनुप्रविश्य मज्जपेशीकासक्तं दोषं विकारकरमपकर्षति ॥ २१ ॥

प्रावृट्शरद्वसन्तेष्वितरेषु आत्ययिकेषु रोगेषु नावनं कुर्याद्ग्रीष्मे पूर्वाह्णे शीते मध्याह्ने वर्षास्वदुर्दिने चेति ॥ २२ ॥"

तत्र श्लोकाः ।

इति पञ्चविधं कर्म विस्तरेण निदर्शितम् ।
येभ्यो यत्त्वहितं यस्मात्कर्म येभ्यश्च यद्धितम् ॥ २३ ॥
न चैकान्तेन निर्दिष्टे तत्राभिनिविशेद्बुधः ।
स्वयमप्यत्र वैद्येन तर्क्यं बुद्धिमता भवेत् ॥ २४ ॥
उत्पद्येत हि सावस्था देशकालबलं प्रति ।
यस्यां कार्यमकार्यं स्यात्कर्म कार्यं च वर्जयेत् ॥ २५ ॥
छर्दिहृद्रोगगुल्मार्ते वमनं स्वे चिकित्सिते ।
अवस्थां प्राप्य निर्दिष्टां कुष्ठिनां बस्तिकर्म च ॥ २६ ॥
तस्मात्सत्यपि निर्दिष्टे कुर्यादूह्यं स्वयं धिया ।
विना तर्केण या सिद्धिर्यदृच्छासिद्धिरेव सा ॥ २७ ॥

इति चरकसंहितायां सिद्धिस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः ।

## बस्तिसूत्रीयसिद्धिः ।

"कृतक्षणं शैलवरस्य रम्ये स्थितं धनेशायतनस्य पार्श्वे ।
महर्षिसंघैर्वृतमग्निवेशः पुनर्वसुं प्राञ्जलिरन्वपृच्छत् ॥ १ ॥
बस्तिर्नरेभ्यः किमपेक्ष्य दत्तः स्यात्सिद्धिमान् किम्मयमस्य नेत्रम् ।
कीदृक्प्रमाणाकृति किं गुणश्च केषां च किं योनिगुणश्च बस्तिः ॥ २ ॥
निरूहकल्पः प्रणिधानमात्राः स्नेहस्य वा काः शमने विधिः कः ।
के बस्तयः केषु मता इतीदं श्रुत्वोत्तरं प्राह वचो महर्षिः ॥ ३ ॥

समीक्ष्य दोषौषधदेशकालसात्म्याग्निसत्त्वादिवयोबलानि ।
बस्तिः प्रयुक्तो नियतं गुणाय स्युः सर्वकर्माणि च सिद्धिमन्ति ॥४॥
सुवर्णरूप्यत्रपुताम्ररीतिकांस्यास्थिशस्त्रद्रुमवेणुदन्तैः ।
नलैर्विषाणैर्मणिभिश्च तैस्तैः कार्याणि नेत्राणि त्रिकर्णिकानि ॥ ५ ॥
षड्द्वादशाष्टाङ्गुलसंमितानि षड्विंशतिद्वादशवर्षजानाम् ।
स्युर्मुद्गकर्कन्धुसतीनवा हि छिद्राणि वर्त्या पिहितानि चापि ॥६॥
यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुलिकामुखानि ॥७॥
स्यात्कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते बस्तिनिबन्धने द्वे ।
जरद्गवो माहिषहारिणो वा स्याच्छौकरो बस्ति रजस्य वापि ॥ ८ ॥
दृढस्तनुर्नष्टशिरोविगन्धः कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयो वीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ ९ ॥
बस्तेरभावे प्लवजो गलो वा स्यादङ्कपादः सुघनः पटो वा ।
नेत्रस्य चालाभत एव नाडी हितास्थिजा वंशभवा नलो वा ॥१०॥
आस्थापनार्हं पुरुषं विधिज्ञः समीक्ष्य पुण्येऽहनि शुक्लपक्षे ।
प्रशस्तनक्षत्रमुहूर्तयोगे जीर्णान्नमेकाग्रमुपक्रमेत ॥ ११ ॥
बलां गुडूचीं त्रिफलां सरास्नां द्वे पञ्चमूले च पलोन्मितानि ।
अष्टौ पलान्यर्धतुलां च मांसाच्छागात्पचेदप्सु चतुर्थशेषम् ॥ १२ ॥
पूतं यवानीफलबिल्वकुष्ठवचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रघृतैः सतैलैर्युतं सुखोष्णैस्तु पिचुप्रमाणैः ॥ १३ ॥
गुडात्पलं द्विप्रसृतां तु मात्रां स्नेहस्य युक्त्या मधुसैन्धवादि ।
स्नेहं सुनिर्मथ्य ततोऽनुकल्पं प्रक्षिप्य बस्तौ मथितं खजेन ॥ १४ ॥
बस्तिं ततः सव्यकरं निधाय सुबद्धमुच्छ्रास्य च निर्व्यलीकम् ।
अङ्गुष्ठमध्येन मुखं पिधाय नेत्राग्रसंस्थामपनीय वर्तिम् ॥ १५ ॥
तैलाक्तगात्रं कृतमूत्रविट्कं नातिक्षुधार्तं शयने मनुष्यम् ।
समेऽथ वेषन्नतशीरसे वा नात्युच्छ्रिते स्वास्तरणोपपन्ने ॥ १६ ॥
सव्येन पार्श्वेन सुखं शयानं कृत्वर्जुदेहं स्वभुजोपधानम् ।
निकुञ्च्य सव्येतरदस्य सक्थि वामं प्रसार्य प्रणयेत्ततस्तम् ॥ १७ ॥

स्निग्धे गुदे नेत्रचतुर्थभागं स्निग्धं शनैर्मृद्वृजुपृष्ठवंशम् ।
अकम्पनावेपनलाघवादीन्पाण्योर्गुणांश्चापि हि दर्शयंस्तम् ॥ १८ ॥
प्रपीड्य चैकग्रहणेन दत्तं नेत्रं शनैरेव ततोऽपकर्षयेत् ।
तिर्यक्प्रणीते तु न याति धारा गुदे व्रणः स्याच्चलिते च नेत्रे ॥१९॥
दत्तः शनैर्नाशयमेति बस्तिः कण्ठं प्रधावत्यतिपीडितश्च ।
शीतस्त्वतिस्तम्भकरो विदाहं मूर्च्छां च कुर्यादतिमात्रमुष्णः ॥२०॥
स्निग्धोऽतिजाड्यं पवनं च रूक्षस्तन्वल्पमात्रा लवणस्त्वयोगम् ।
करोति मात्राभ्यधिकोऽतियोगं क्षामं तु सान्द्रः सुचिरेण चैति॥२१॥
दाहातिसारौ लवणोऽतिकुर्यात्तस्मात्प्रयुक्त सममेव दद्यात् ।
पूर्वं हि योज्यं मधुसैन्धवाभ्यां स्नेहं विनिर्मथ्य ततोऽनुकल्कम् २२
विमथ्य संयोज्य पुनर्द्रवैस्तद्बस्तौ निदध्यान्मथितं खजेन ।
आमाश्रयोऽग्निर्ग्रहणीगुदं च तत्पार्श्वसंस्थस्य सुखोपलब्धिः॥ २३ ॥
लीयन्त एवं बलयश्च तस्मात्सव्यं शयानोऽर्हति बस्तिदानम् ।
विड्वातवेगो यदि चार्धदत्ते निष्कृष्य मुक्ते प्रणयेदशेषम् ॥ २४ ॥
उत्तानदेहश्च कृतोपधानः स्याद्वीर्यमाप्नोति तथास्य देहम् ।
एकोऽपकर्षत्यनिलं स्वमार्गात्पित्तं द्वितीयस्तु कफं तृतीयः ॥ २५ ॥
प्रत्यागते कोष्णजलावसिक्तः शाल्यन्नमद्यात्तनुना रसेन ।
जीर्णे तु सायं लघु चाल्पमात्रं भुक्तेऽनुवास्यः परिबृंहणार्थम् ॥२६॥
निरूहपादांशसमेन तैलेनाम्लानि लव्वौषधसाधितेन ।
दत्त्वा स्फिचौ पाणितलेन हन्यात्स्नेहस्य शीघ्रागमरक्षणार्थम् ॥२७॥
ईषत्पदाङ्गुष्ठयुगं च कर्षेदुत्तानदेहस्य तनौ प्रमृज्यात् ।
स्नेहेन पार्ष्ण्यङ्गुलिपिण्डिकाश्च ये चास्य गात्रावयवा रुगार्ताः॥२८॥
तांश्चावमृज्यात्ससुखं ततश्च निद्रामुपासीत कृतोपधानः ।
भागाः कषायस्य तु पञ्च पित्ते स्नेहस्य षष्ठः प्रकृतौ स्थिते च॥२९॥
वाते विवृद्धे तु चतुर्थभागो मात्रा निरूहेषु कफेऽष्टभागः ।
निरूहमात्रा प्रसृतार्धमाद्ये वर्षे ततोऽर्धप्रसृताभिवृद्धिः ॥ ३० ॥
आ द्वादशात्स्यात्प्रसृताभिवृद्धिरष्टादशाद्द्वादशतः परं स्युः ।
आ सप्ततेरुक्तमिदं प्रमाणमतःपरं षोडशवद्विधेयम् ॥ ३१ ॥

निरूहमात्रा प्रसृतप्रमाणा बाले च वृद्धे च मृदुर्विशेषः।
नात्युच्छ्रितं नाप्यतिनीचपादं सपादपीठं शयनं प्रशस्तम् ॥ ३२ ॥
प्रधानमृद्वास्तरणोपपन्नं प्राक्शीर्षकं शुक्लपटोत्तरीयम्।
भोज्यं पुनर्व्याधिमवेक्ष्य सम्यक् प्रकल्पयेद्यूषपयोरसाद्यैः ॥ ३३ ॥
सर्वेषु विद्याद्विधिमेतदाद्यं वक्ष्यामि बस्तीनत उत्तरीयान्।
सम्यक् प्रणीताः खलु बस्तयो ये वातामयघ्नाश्च बलप्रदाश्च ॥ ३४ ॥
द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्वशेषः।
त्रिस्नेहयुक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः ॥ ३५ ॥
स्थिरादिवर्गस्य बलापटोलत्रायन्तिकैरण्डयवैर्युतस्य।
प्रस्थोरसश्छागरसार्धयुक्तः साध्यः परः प्रस्थरसश्च यावत् ॥ ३६ ॥
प्रियङ्गुकृष्णो घनकल्कयुक्तः सतैलसर्पिर्मधुसैन्धवश्च।
स्याद्दीपनो मांसबलप्रदश्च चक्षुर्बलं चापि ददाति सद्यः ॥ ३७ ॥
एरण्डमूलात्त्रिपलं पलानि ह्रस्वानि मूलानि च यानि पञ्च।
रास्नाश्वगन्धातिबलागुडूचीपुनर्नवारग्वधदेवदारु ॥ ३८ ॥
भागा पलांशा मदनाष्टयुक्ता जलद्विकंसे क्वथितेऽष्टशेषे।
पेष्या शताह्वाहपुषाप्रियङ्गु सपिप्पलीकं मधुकं वचा च ॥ ३९ ॥
रसाञ्जनं वत्सकबीजमुस्तं भागाक्षमात्रं लवणांशयुक्तम्।
समाक्षिकस्तैलयुतः समूत्रो बस्तिर्नृणां दीपनलेखनीयः ॥ ४० ॥
जङ्घोरुपादत्रिकपृष्ठशूलं कफावृतं मारुतनिग्रहं च।
विण्मूत्रवातग्रहणं सशूलमाध्मानतामश्मरिशर्करं च ॥ ४१ ॥
आनाहमर्शोग्रहणीप्रदोषानेरण्डबस्तिः शमयेत्प्रयुक्तः।
वैद्येन सम्यक् कुशलेन चैष पुनर्वसूक्तः कृपया नराणाम् ॥ ४२ ॥
चतुष्पले तैलघृतस्य भृष्टश्छागाच्छतार्धाद्दधिदाडिमाम्लः।
रसः सपेष्यो बलवर्णमांसरेतोऽग्निदश्चान्ध्यशिरोरुजाघ्नः ॥ ४३ ॥
जलद्विकंसेऽष्टपलं पलाशात्पक्त्वा रसोऽर्धाढकमात्रशेषः।
कल्कैर्बलामागधिकापलाभ्यां युक्तः शताह्वाद्विपलेन चापि ॥ ४४ ॥
ससैन्धवः क्षौद्रयुतः सतैलो देयो निरूहो बलवर्णकारी।



आनाहपार्श्वामययोनिदोषान्गुल्मानुदावर्तरुजं च हन्यात् ॥ ४५ ॥

यष्ट्याह्वमूलाष्टपलेन सिद्धं पयः शताह्वाफलपिप्पलीभिः ।
युक्तं ससर्पिर्मधु वातरक्तवैस्वर्यवीसर्पहितो निरूहः ॥ ४६ ॥
यष्ट्याह्वलोध्राभयचन्दनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्करं क्षौद्रयुतं सुशीतं पित्तामयान्हन्ति सजीवनीयाम् ॥ ४७ ॥
द्विकार्षिकांश्चन्दनपद्मकर्द्धियष्ट्याह्वरास्नावृषशारिवाश्च ।
सलोध्रमञ्जिष्ठमथाप्यनन्ताबलास्थिराद्यं तृणपञ्चमूलम् ॥ ४८ ॥
निःक्वाथ्य तोयेन रसेन तेन शृतं पयोऽर्धाढकमम्बुहीनम् ।
जीवन्तिमेदर्द्धिशतावरीभिर्वीराद्विकाकोलिकशेरुकाभिः ॥ ४९ ॥
सितोपलाजीवकपद्मरेणुप्रपौण्डरीकैः कमलोत्पलैश्च ।
लोध्रात्मगुप्तामधुकैर्विदारीसुञ्जातकैः केशरचन्दनैश्च ॥ ५० ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन्क्षीरेण वाद्यात्परिषिक्तगात्रः ॥ ५१ ॥
दाहातिसारौ प्रदरास्रपित्तहृत्पाण्डुरोगान्विषमज्वरांश्च ।
स गुल्ममूत्रग्रहकामलादीन्सर्वामयान्पित्तकृतान्निहन्ति ॥ ५२ ॥
द्राक्षादिकाश्मर्यमधूकसेव्यैः सशारिवाचन्दनशीतपाक्यैः ।
पयः शृतं श्रावणिमुद्गपर्णीतुगात्मगुप्तामधुयष्टिकल्कैः ॥ ५३ ॥
गोधूमचूर्णैश्च तथाक्षमात्रैः सक्षौद्रसर्पिर्मधुयष्टितैलैः ।
पथ्याविदारीक्षुरसैर्गुडेन बस्तिं युतं पित्तहरं विदध्यात् ॥ ५४ ॥
हृन्नाभिपार्श्वोदरदेहदाहे दाहेऽन्तरस्थे च सकृच्छ्रमूत्रे ।
क्षीणे क्षते रेतसि चापि नष्टे पैत्तेऽतिसारे च नृणां प्रशस्तः ॥ ५५ ॥
कोशातकारग्वधदेवदारुमूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान्बृहतीं च तोये रसस्य तस्य प्रसृता दश स्युः ॥५६॥
तां सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
फलाह्वतैलस्य समाक्षिकस्य क्षारस्य तैलस्य च सार्षपस्य ॥ ५७ ॥
दद्यान्निरूहं कफरोगिणे ज्ञो मन्दाग्नये चाप्यशनद्विषे च ।
पटोलपथ्यामरदारुभिर्वा सपिप्पलीकैः क्वथितैर्जलाख्यैः ॥ ५८ ॥
द्विपञ्चमूले त्रिफलां सबिल्वां फलानि गोमूत्रयुतः कषायः ।
कलिङ्गपाठाफलमुस्तकल्कः ससैन्धवः क्षारयुतः सतैलः ॥ ५९ ॥

निरूहमुख्यः कफजान्विकारान्सपाण्डुरोगालसकासदोषान् ।'
हन्यात्तथा मारुतमूत्रसङ्गं बस्तेस्तथाटोपमथापि घोरम् ॥ ६० ॥
रास्नामृतैरण्डविडङ्गदारुसप्तच्छदोशीरसुराह्वनिम्बैः ।
श्यामाकभूनिम्बपटोलपाठातिक्ताखुपर्णीदशमूलमुस्तैः ॥ ६१ ॥
त्रायन्तिकाशिग्रुफलत्रिकैश्च क्वाथः सपिण्डीतकतोयमूत्रः ।
यष्ट्याह्वकृष्णाफलिनीशताह्वारसाञ्जनश्वेतवचाविडङ्गैः ॥ ६२ ॥
कलिङ्गपाठाम्बुदसैन्धवैश्च कल्कैः ससर्पिर्मधुतैलमिश्रः ।
अयं निरूहः क्रिमिकुष्ठमेहब्रध्नोदराजीर्णकफातुरेभ्यः ॥ ६३ ॥
रूक्षौषधैरत्यपतर्पितेभ्य एतेषु रोगेष्वपि सत्सु दत्तः ।
निहत्य वातं ज्वलनं प्रदीप्य विजित्य रोगांश्च बलं करोति ॥ ६४॥
पुनर्नवैरण्डवृषाश्मभेदवृश्चीरभूतीकबलापलाशाः ।
द्विपञ्चमूलानि पलांशिकानि क्षुण्णानि धौतानि पलानि चाष्टौ ॥६५॥
बिल्वं यवान्कोलकुलत्थधान्यफलानि चैकप्रसृतोन्मितानि ।
पयोजलार्धाढकयोः शृतं तत्क्षीरावशेषं सितवस्त्रपूतम् ॥ ६६ ॥
वचाशताह्वामरदारुकुष्ठयष्ट्याह्वसिद्धार्थकपिप्पलीनाम् ।
कल्कैर्यवान्या मदनैश्च युक्तं नात्युष्णशीतं गुडसैन्धवाक्तम् ॥ ६७ ॥
क्षौद्रस्य तैलस्य च सर्पिषश्च तथैव युक्तं प्रसृतत्रयेण ।
दद्यान्निरूहं विधिना विधिज्ञस्तं सर्वसंसर्गकृतामयघ्नम् ॥ ६८ ॥
स्निग्धोष्ण एकः पवने निरूहो द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः ॥६९॥
रसेन वाते प्रतिभोजनं स्यात्क्षीरेण पित्ते तु कफे च यूषैः ।
तथानुवास्येषु च बिल्वतैलं स्याज्जीवनीयं फलसाधितं च ॥ ७० ॥"
इतीदमुक्तं निखिलं यथावद्बस्तिप्रदानस्य विधानमग्र्यम् ।
योऽधीत्य विद्वानिह बस्तिकर्म करोति लोके लभते स सिद्धिम् ॥७१॥

इति चरकसंहितायां सिद्धिस्थाने तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः ।

## स्नेहव्यापादिका सिद्धिः ।

"स्नेहबस्तीन्निबोधेमान्वातपित्तकफापहान् ।
मिथ्याप्रणिहितानां च व्यापदः सचिकित्सिताः ॥ १ ॥
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्येरण्डभूतीकभार्गीवृषकरोहिषाम् ॥ २ ॥
शतावरीं सहचरं काकनासां पलांशिकाम् ।
यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् ॥ ३ ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ।
तैलाढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥ ४ ॥
अनुवासनमेतद्धि सर्ववातविकारनुत् ।
आनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ५ ॥
शताह्वा यवबिल्वाम्लैः सिद्धं तैलं समीरणे ।
सैन्धवेनाग्निवर्णेन तप्तं चानिलनुद्धृतम् ॥ ६ ॥
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ७ ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम् ।
पिष्ट्वा तैलं घृतं क्षीरे साधयेत्तच्चतुर्गुणे ॥ ८ ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ।
मूत्ररेतोरजोदोषान्हरेत्तदनुवासनात् ॥ ९ ॥
लाभतश्चन्दनाद्यैश्च पिष्टैः क्षीरचतुर्गुणम् ।
तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ॥ १० ॥
सैन्धवं मदनं कुष्ठं शताह्वां निचुलं बलाम् ।
ह्रीबेरं मधुकं भार्गीं देवदारु सकट्फलम् ॥ ११ ॥
नागरं पुष्करं मेदां चविकां चित्रकं शटीम् ।
विडङ्गातिविषे श्यामां हरेणुं नीलिनीं स्थिराम् ॥ १२ ॥
बिल्वाजमोदे कृष्णां च दन्तीं रास्नां च पेपयेत् ।
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥ १३ ॥

ब्रध्नोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीं चैव हन्यात्तदनुवासनात् ॥ १४ ॥
मदनैर्वाम्लसंयुक्तैर्बिल्वाद्येन गणेन वा ।
तैलं कफहरैर्वापि कफघ्नं कल्पयेद्भिषक् ॥ १५ ॥
विडङ्गैरण्डरजनीपटोलत्रिफलामृताः ।
जातिप्रवालनिर्गुण्डीदशमूलाखुपर्णिकाः ॥ १६ ॥
निम्बपाठासहचरशम्पाककरवीरकम् ।
एषां क्काथेन विपचेत्तैलमेभिश्च कल्कितैः ॥ १७ ॥
फलबिल्वत्रिवृत्कृष्णारास्नाभूनिम्बदारुभिः ।
सप्तपर्णवचोशीरदार्वीकुष्टकलिङ्गकैः ॥ १८ ॥
लतायष्टिशताह्वाग्निशटीचोरकपौष्करैः ।
तत्कुष्टानि क्रिमीन्मेहानर्शांसि ग्रहणीगदम् ॥ १९ ॥
क्लीबत्वं विषमाग्नित्वं मलं दोषत्रयं तथा ।
प्रयुक्तं प्रणुदत्याशु पानाभ्यङ्गानुवासनैः ॥ २० ॥
व्याधिव्यायामकर्माध्वक्षीणाबलनिरोजसाम् ।
क्षीणशुक्रस्य चातीव स्नेहबस्तिबलप्रदः ॥ २१ ॥
पादजङ्घोरुपृष्ठस्य कट्याश्च स्थिरतां पराम् ।
जनयेदप्रजानां च प्रजां स्त्रीणां तथा नृणाम् ॥ २२ ॥
वातपित्तकफान्यन्नपुरीषैरावृतस्य च ।
अभुक्ते च प्रणीतस्य स्नेहबस्तेः षडापदः ॥ २३ ॥
शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः ।
अतिभुक्ते गुरुर्वर्चः संचयेऽल्पबलस्तथा ॥ २४ ॥
दत्तस्तैरावृतः स्नेहो न यात्यभिभवादधः ।
अभुक्तेनावृतत्वाच्च यात्यूर्ध्वं तस्य लक्षणम् ॥ २५ ॥
अङ्गमर्दज्वराध्मानशीतस्तम्भोरुपीडनैः ।
पार्श्वरुग्वेष्टनैर्विद्यात्स्नेहं वातावृतं भिषक् ॥ २६ ॥
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतिल्वकैः ।
सौवीरकसुराकोलकुलत्थरससाधितैः ॥ २७ ॥

निरूहैर्निर्हरेत्सम्यक् समूत्रैः पञ्चमूलिकैः ।
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥ २८ ॥
दाहरागतृषामोहतमकज्वरदूषणैः ।
विद्यात्पित्तावृतं स्वादु तिक्तैस्तं बस्तिभिर्हरेत् ॥ २९ ॥
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ।
संमूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ॥ ३० ॥
कषायकटुतीक्ष्णोष्णैः सुरासूत्रोपसाधितैः ।
फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ॥ ३१ ॥
छर्दिमूर्च्छारुचिग्लानिज्वरशूलाङ्गमर्दनैः ।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ॥ ३२ ॥
कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ।
विरेको मृदुरत्रामविहिता च क्रिया हिता ॥ ३३ ॥
विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ।
स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवर्तिभिः ॥ ३४ ॥
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ।
निर्हरेद्विधिना सम्यगुदावर्तहरेण च ॥ ३५ ॥
अभुक्ते शून्यपायौ वा वेगात्स्नेहोऽतिपीडितः ।
धावत्यूर्ध्वं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥ ३६ ॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थकान् ।
तत्सिद्धतैल इष्टोऽत्र निरूहः सानुवासनः ॥ ३७ ॥
कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः ।
छर्दिघ्नीभिः क्रियाभिश्च तस्य कार्यं निवर्तनम् ॥ ३८ ॥
यस्य नोपद्रवं कुर्यात्स्नेहबस्तिरनिःसृतः ।
सर्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥ ३९ ॥
भुक्तस्नेहं द्रवोष्णं च लघुपथ्योपसेवनम् ।
भुक्तवान्मात्रया योज्यमनुवास्य त्र्यहात्र्यहात् ॥ ४० ॥
धान्यनागरसिद्धं हि तोयं दद्याद्विचक्षणः ।
व्युषिताय निशाः कल्यमुष्णं वा केवलं जलम् ॥ ४१ ॥

स्नेहाजीर्णं जरयति श्लेष्माणं तद्भिनत्ति च ।
मारुतस्यानुलोम्यं च कुर्यादुष्णोदकं नृणाम् ॥ ४२ ॥
वमने वा विरेके च निरूहे सानुवासने ।
तस्मादुष्णोदकं देयं वातश्लेष्मप्रशान्तये ॥ ४३ ॥
रूक्षनित्यस्तु दीप्ताग्निर्व्यायामी मारुताशयी ।
वङ्क्षणश्रोण्युदावर्तवातार्ताश्च दिने दिने ॥ ४४ ॥
एषां चाशु जरां स्नेहो यात्यम्बु सिकतास्विव ।
अतोऽन्येषां त्र्यहात्प्रायः स्नेहं पचति पावकः ॥ ४५ ॥
नत्वामं प्रणयेत्स्नेहं स ह्यभिष्यन्दयेद्गुदम् ।
सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ ४६ ॥
न चैव गुदकण्ठाभ्यां दद्यात्स्नेहमनन्तरम् ।
उभयस्मात्समं गच्छन्वाय्वग्नीन्दूषयेत्समम् ॥ ४७ ॥
स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहात्पवनाद्भयम् ॥ ४८ ॥
तस्मान्निरूढः स्नेह्यः स्यान्निरूढश्चानुवासितः ।
स्नेहशोधनयुक्त्यैव बस्तिकर्म त्रिदोषनुत् ॥ ४९ ॥
कर्मव्यायामभाराध्वपानस्त्रीकर्षितेषु च ।
दुर्बले वातभग्ने च मात्राबस्तिः सदा मतः ॥ ५० ॥
ह्रस्वायाः स्नेहमात्राया मात्राबस्तिः समो भवेत् ।
यथेष्टाहारचेष्टस्य सर्वकालं निरत्ययः ॥ ५१ ॥
बल्यं सुखोपचर्यं च सुखं सृष्टपुरीषकृत् ।
स्नेहमात्राविधानं हि बृंहणं वातरोगनुत् ॥ ५२ ॥"

तत्र श्लोकौ ।

वातादीनां शमायोक्ताः प्रवराः स्नेहबस्तयः ।
तेषां चाज्ञप्रयुक्तानां व्यापदः सचिकित्सिताः ॥ ५३ ॥
प्राग्भोज्यं स्नेहबस्तेर्यद्ध्रुवं येऽहोरात्र्यहाच्च ये ।
स्नेहबस्तिविधिश्चोक्तो मात्राबस्तिविधिस्तथा ॥ ५४ ॥
इति चरकसंहितायां सिद्धिस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ।

## नेत्रबस्तिव्यापादिकासिद्धिः ।

"अथ नेत्राणि बस्तींश्च शृणु वर्ज्यानि कर्मसु ।
नेत्रस्याज्ञप्रणीतस्य व्यापदः सचिकित्सिताः ॥ १ ॥
ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम् ।
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत् ॥ २ ॥
अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्रवाः ।
गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम् ॥ ३ ॥
मांसलच्छिद्रविषमस्थूलजालकवातलाः ।
छिन्नः क्लिन्नश्च तानष्टौ बस्तीन्कर्मसु वर्जयेत् ॥ ४ ॥
गतिवैषम्यविस्रत्वस्रावदौर्गन्ध्यविट्स्रवाः ।
फेनिलच्युतधार्यत्वं बस्तेः स्याद्बस्तिदोषतः ॥ ५ ॥
सवातातिद्रुतोत्क्षिप्ततिर्यगुत्क्षिप्तकम्पिताः ।
अतिवाह्यगमन्दातिवेगदोषाः प्रणेतृतः ॥ ६ ॥
अनुच्छ्वासानुबन्धे वा दत्ते निःशेष एव वा ।
प्रविश्य कुपितो वायुः शूलतोदकरो भवेत् ॥ ७ ॥
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ।
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ॥ ८ ॥
स्यात्कटीगुदजङ्घार्तिबस्तिस्तम्भोरुभेदनम् ।
भोजनं तत्र वातघ्नं स्नेहाः स्वेदाः सबस्तयः ॥ ९ ॥
तिर्यग्बन्धावृतद्वारे बद्धे वापि न गच्छति ।
नेत्रं तदूर्ध्वं निष्कृष्य संशोध्य च पुनर्नयेत् ॥ १० ॥
पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ।
उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली ॥ ११ ॥
बस्तिः स्यात्तत्र बिल्वादिफलश्यामानि मूत्रवान् ।
स्याद्दाहो दवथुः शोफः कम्पनाभिहते गुदे ॥ १२ ॥

कषायमधुराः शीताः सेकास्तत्र सबस्तयः।
अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्वलेः॥ १३॥
स्याच्छर्दिदाहनिस्तोदगुदवर्चःप्रवर्तनम्।
तत्र सर्पिः पिचुः क्षीरं पिच्छाबस्तिश्च शस्यते॥ १४॥
न वा वहति मन्दस्तु बाह्यास्त्वाशु निवर्तते।
स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता॥ १५॥
अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम्।
तत्र बस्तिर्विरेकश्च गलपीडादिकर्म च॥ १६॥

तत्र श्लोकः।

नेत्रबस्तिप्रणेतॄणां दोषानेतान्सभेषजान्।
विद्वांस्तत्त्वेन मतिमान्बस्तिकर्माणि कारयेत्॥ १७॥

इति चरकसंहितायां सिद्धिस्थाने पञ्चमोऽध्यायः॥ ५॥

---

## षष्ठोऽध्यायः।

### वमनविरेचनव्यापत्सिद्धिः।

अथ शोधनयोः सम्यग्विधिमूर्ध्वानुलोमयोः।
असम्यक्कृतयोश्चैव दोषान्वक्ष्यामि सौषधान्॥ १॥
"अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः।
तदन्तरे प्रावृडाद्यास्तेषां साधारणास्त्रयः॥ २॥
प्रावृट् शुचिनभौ ज्ञेयौ शरदूर्जसहौ पुनः।
तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति॥ ३॥
एतानृतून्विचिन्त्यैव दद्यात्संशोधनं नृणाम्।
स्वस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु।
कर्मणां वमनादीनामन्तरेष्वन्तरेषु च॥ ४॥
स्नेहस्वेदौ प्रयुञ्जीत स्नेहाद्यन्ते प्रयोजयेत्।
विसर्पपीडकाशोफकामलापाण्डुरोगिणः।
अभिघातविषार्तांश्च नातिस्निग्धान्विरेचयेत्॥ ५॥

नातिस्निग्धशरीराय दद्यात्स्नेहविरेचनम् ।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम् ॥ ६ ॥
स्नेहस्वेदोपपन्नेन जीर्णे मात्रावदौषधम् ।
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥ ७ ॥
स्निग्धात्पात्राद्यथा तोयमयत्नेन प्रणुद्यते ।
कफादयः प्रणुद्यन्ते स्निग्धाद्देहात्तथौषधैः ॥ ८ ॥
आर्द्रं काष्ठं यथा वह्निर्विष्यन्दयति सर्वतः ।
तथा स्निग्धस्य वै दोषान्स्वेदो विष्यन्दयेत्स्थिरान् ॥ ९ ॥
क्लिष्टं वासो यथोत्क्लेश्य मलैः संशोध्यतेऽम्भसा ।
स्नेहस्वेदैस्तथोत्क्लेश्य शोध्यते शोधनैर्मलः ॥ १० ॥
अजीर्णे वर्धते ग्लानिर्विबन्धश्चैव जायते ।
पीतं संशोधनं चैव विपरीतं प्रवर्तते ॥ ११ ॥
अल्पमात्रं महावेगं बहुदोषहरं सुखम् ।
लघुपाकं सुखास्वादं प्रीणनं व्याधिनाशनम् ॥ १२ ॥
अविकाराविपन्नं च नातिग्लानिकरं च तत् ।
गन्धवर्णरसोपेतं विद्यान्मात्रावदौषधम् ॥ १३ ॥
विधूय मानसान्दोषान्कामक्रोधभयादिकान् ।
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥ १४ ॥
नरः श्वो वमनं पाता भुञ्जीत कफवर्धनम् ।
सुजरं द्रवभूयिष्ठं लघुशीतं विरेचनम् ॥ १५ ॥
उत्क्लिष्टाल्पकफत्वेन क्षिप्रं दोषाः स्रवन्ति हि ।
पीतौषधस्य तु भिषक् शुद्धिलिङ्गानि लक्षयेत् ।
ऊर्ध्वं कफानुगे पित्ते विट्पित्तेऽनुकफे त्वधः ॥ १६ ॥
हृतदोषं वदेत्कार्श्यदौर्बल्यं चेत्सलाघवम् ।
वामयेत्तु ततः शेषमौषधं न त्वलाघवे ॥ १७ ॥
स्तैमित्येऽनिलसङ्गे च निरुद्गारेऽपि वामयेत् ।
आलाघवादणुत्वाच्च कफस्याग्निकरं भवेत् ॥ १८ ॥
वमिते वर्धते वह्निः शमं दोषा व्रजन्ति हि ।

वमितं लङ्घयेत्सस्यग्जीर्णलिङ्गान्यलक्षयन्।
तानि दृष्ट्वा तु पेयादिक्रमं कुर्यान्न लङ्घनम् ॥ १९ ॥
संशोधनाभ्यां शुद्धस्य हृतदोषस्य देहिनः।
यात्यग्निर्मन्दतां तस्मात्क्रमं पेयादिमाचरेत् ॥ २० ॥
कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके।
तर्पणादिक्रमं कुर्यात्पेयाभिष्यन्दयेद्धि तान् ॥ २१ ॥
अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णोर्जोमनस्विता।
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ २२ ॥
क्लमो दाहोऽङ्गमर्दश्च भ्रममूर्च्छाशिरोरुजा।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ २३ ॥
अकालेऽल्पातिमात्रं च पुराणं न च भावितम्।
असम्यक् संस्कृतं चैव व्यापद्येतौषधं ध्रुवम् ॥ २४ ॥
आध्मानं परिकर्तिश्च स्रावो हृद्गात्रयोर्ग्रहः।
जीवादानं सविभ्रंशः स्तम्भः सोपद्रवः क्लमः ॥ २५ ॥
अयोगादतियोगाच्च दशैता व्यापदो मताः।
प्रेष्यभैषज्यवैद्यानां वैगुण्यादातुरस्य च।
शुद्धोत्क्लिष्टेन दुर्गन्धमहृद्यमतिबाध्यते ॥ २६ ॥
योगः सम्यक्प्रवृत्तिः स्यादतियोगोऽतिवर्तनम्।
अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्तनम् ॥ २७ ॥
श्लेष्मोत्क्लिष्टेन दुर्गन्धमहृद्यं नाति वा बहु।
विरेचनमजीर्णे च पीतमूर्ध्वं प्रवर्तते ॥ २८ ॥
क्षुधार्तमृदुकोष्ठाभ्यां स्वल्पोत्क्लिष्टकफेन वा।
तीक्ष्णं पीतं स्थितं क्षुब्धं वमनं स्याद्विरेचनम्।
अयोगे तत्र कर्तव्यं समासेनाभिधीयते ॥ २९ ॥
प्रातिलोम्येन दोषाणां हरणात्तेष्वकृच्छ्रतः।
अयोगसंज्ञे कृच्छ्रेण न चागच्छति चाल्पशः ॥ ३० ॥
पीतौषधो न शुद्धश्चेज्जीर्णे तस्मिन्पुनः पिबेत्।
औषधं न त्वजीर्णेऽन्यद्द्वयं स्यादतियोगतः ॥ ३१ ॥

कोष्ठस्य गुरुतां ज्ञात्वा लघुत्वं बलमेव च ।
अयोगे मृदु वा दद्यादौषधं तीक्ष्णमेव वा ॥ ३२ ॥
वमनं न तु दुश्छर्द्यां मृदुकोष्ठे विरेचनम् ।
पाययेतौषधं भूयो हन्यात्पीतं पुनर्हि तौ ॥ ३३ ॥
अस्निग्धास्विन्नदेहस्य रूक्षस्यानवमौषधम् ।
दोषानुत्क्लिश्य निर्हर्तुमशक्तं जनयेद्गदान् ॥ ३४ ॥
विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं भृशम् ।
पिण्डिकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम् ॥ ३५ ॥
स्निग्धस्विन्नस्य चात्यल्पं दीप्ताग्नेर्जीर्णमौषधम् ।
शीतैर्वा स्तम्भयेत्सामे दोषानुत्क्लिश्य नाहरेत् ॥ ३६ ॥
तानेव जनयेद्रोगान्न योगः सर्व एव सः ।
विज्ञाय मतिमांस्तत्र यथोक्तां कारयेत्क्रियाम् ॥ ३७ ॥
तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ।
पाययेत पुनर्जीर्णे समूत्रैर्वा निरूहयेत् ॥ ३८ ॥
निरूढं च रसैर्धन्वैर्भोजयित्वाऽनुवासयेत् ।
फलमागधिकादारुसिद्धतैलेन मात्रया ॥ ३९ ॥
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ।
नचातितीक्ष्णेन ततो ह्यतियोगस्तु जायते ।
अतितीक्ष्णं क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ॥ ४० ॥
हत्वाशु विट्पित्तकफान्धातून्विस्रावयेद्द्रवान् ।
बलस्वरक्षयं दाहं कण्ठशोषं क्लमं तृषाम् ।
कुर्याच्च मधुरैस्तत्र शेषमौषधमुल्लिखेत् ॥ ४१ ॥
वमने तु विरेकः स्याद्विरेके वमनं मृदु ।
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥ ४२ ॥
कषायमधुरैः शीतैरन्नपानौषधैस्तथा ।
रक्तपित्तातिसारघ्नैर्दाहज्वरहरैरपि ॥ ४३ ॥
अञ्जनं चन्दनोशीरमज्जासृक्शर्करोदकम् ।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥ ४४ ॥

शुङ्गाभिर्वा वटादीनां सिद्धां पेयां समाक्षिकाम्।
वर्चःसंग्राहिकैः सिद्धं क्षीरं भोज्यं च दापयेत् ॥ ४५ ॥
जाङ्गलैर्वा रसैर्भोज्यं पिच्छाबस्तिं च दापयेत्।
मधुरैरनुवास्यश्च सिद्धेन क्षीरसर्पिषा ॥ ४६ ॥
वमनस्यातियोगे तु शीताम्बुपरिषेचितम्।
पिबेत्फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥ ४७ ॥
सोद्गारायां भृशं वम्यां मूर्च्छायां धान्यमुस्तयोः।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ ४८ ॥
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः।
स्निग्धाम्ललवणैर्हृद्यैर्यूषक्षीररसैर्हिताः ॥ ४९ ॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः।
निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥ ५० ॥
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम्।
यवागूं तनुकां दद्यात्स्नेहस्वेदौ च बुद्धिमान् ॥ ५१ ॥
वमितश्च विरिक्तश्च मन्दाग्निश्च विलङ्घितः।
अग्निप्राणविवृद्ध्यर्थं क्रमं पेयादिकं भजेत् ॥ ५२ ॥
बहुदोषस्य रूक्षस्य हीनाग्नेरल्पमौषधम्।
सोदावर्तस्य चोत्क्लिश्य दोषान्मार्गान्निरुध्य च ॥ ५३ ॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजाम्।
श्वासविण्मूत्रवातानां सङ्गं कुर्याच्च दारुणम् ॥ ५४ ॥
अभ्यङ्गं स्वेदवर्त्यादि सनिरूहानुवासनम्।
उदावर्तहरं सर्वं कर्माध्मातस्य शस्यते ॥ ५५ ॥
स्निग्धेन गुरुकोष्ठेन सामे बलवदौषधम्।
क्षामेण मृदुकोष्ठेन श्रान्तेनाल्पबलेन वा ॥ ५६ ॥
पीतं गत्वा गुदं साममाशु दोषं निरस्य च।
तीव्रशूलांसपिच्छास्रां करोति परिकर्तिकाम् ॥ ५७ ॥
लङ्घनं पाचनं सामे रूक्षोष्णं लघुभोजनम्।
बृंहणीयो विधिः सर्वः क्षामस्य मधुरस्तथा ॥ ५८ ॥

आमे जीर्णे तु बन्धश्चेत्क्षाराम्लं लघु शस्यते ।
पुष्पकासीसमिश्रं वा क्षारेण लवणेन च ॥ ५९ ॥
सदाडिमरसं सर्पिः पिबेद्वातेऽधिके सति ।
दध्यम्लं भोजने पाने संयुक्तं दाडिमत्वचा ॥ ६० ॥
देवदारुतिलानां वा कल्कमुष्णाम्बुना पिबेत् ।
अश्वत्थोदुम्बरप्लक्षकदम्बैर्वा शृतं पयः ॥ ६१ ॥
कषायमधुरं बस्तिं पिच्छाबस्तिमथापि वा ।
यष्टीमधुकसिद्धं वा स्नेहबस्तिं प्रदापयेत् ॥ ६२ ॥
अल्पं तु बहुदोषस्य दोषमुत्क्लिश्य भेषजम् ।
अल्पाल्पं स्रावयेत्कण्डूं शोफकुष्ठानि गौरवम् ॥ ६३ ॥
कुर्याच्चाग्निवधोत्क्लेशस्तैमित्यारुचिपाण्डुताम् ।
परिस्रावगतं दोषं शमयेद्वामयेदपि ॥ ६४ ॥
स्नेहितं वा पुनस्तीक्ष्णं पाययेच्च विरेचनम् ।
शुद्धे चूर्णासवारिष्टान्संस्कृतांश्च प्रदापयेत् ॥ ६५ ॥
पीतौषधस्य वेगानां निग्रहान्मारुतादयः ।
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ॥ ६६ ॥
सहिक्काश्वासपार्श्वार्तिदैन्यलालाक्षिविभ्रमैः ।
जिह्वां खादति निःसंज्ञो दन्तान्किटिकिटापयन् ॥ ६७ ॥
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।
मधुरैः पित्तमूर्च्छार्तं कटुभिः कफमूर्च्छितम् ॥ ६८ ॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ।
कायाग्निं च बलं चास्य क्रमेणाभिविवर्धयेत् ॥ ६९ ॥
पवनेनातिवमतो हृदयं यस्य पीड्यते ।
तस्मै स्निग्धाम्ललवणं दद्यात्पित्तकफेऽन्यथा ॥ ७० ॥
पीतौषधस्य वेगानां निग्रहेण कफेन वा ।
रुद्धोऽति च विशुद्धस्य गृह्णात्यङ्गानि मारुतः ॥ ७१ ॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्तिमूर्च्छितैः ।
तत्र वातहरं सर्वं स्नेहस्वेदादि कारयेत् ॥ ७२ ॥

अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम्।
दोषान्हत्वा विनिर्मथ्य जीवं हरति शोणितम्॥ ७३॥
तेनान्नं मिश्रितं दद्याद्वायसाय शुनेऽपि वा।
भुंक्ते तच्चेद्वदेज्जीवं न भुंक्ते पित्तमादिशेत्॥ ७४॥
शुक्लं वा भावितं वस्त्रमाधानं कोष्णवारिणा।
प्रक्षालितं विवर्णं चेत्पित्तं शुद्धं तु शोणितम्॥ ७५॥
तृषामूर्च्छामदार्तस्य कुर्यादामरणात्क्रियाम्।
तस्य पित्तहरीं सर्वामतियोगे च या हिता॥ ७६॥
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक्।
पिबेज्जीवाभिसन्धानं जीवं तद्ध्याशु गच्छति॥ ७७॥
तदेव दर्भमृदितं रक्तं बस्तिं प्रदापयेत्।
श्यामाकाश्मर्यबदरीदूर्वावीरैः शृतं जलम्॥ ७८॥
घृतमण्डाञ्जनयुतं बस्तिं शीतं प्रदापयेत्।
पिच्छाबस्तिं सुपीतं वा घृतमण्डानुवासनम्॥ ७९॥
गुदभ्रंशं कषायैश्च स्तम्भयित्वा प्रवेशयेत्।
सामगन्धर्वशब्दांश्च संज्ञानाशेऽस्य कारयेत्॥ ८०॥
यदा विरेचनं पीतं विडन्तरवतिष्ठते।
वमनं भेषजान्तं वा दोषानुत्क्लेश्य नावहेत्॥ ८१॥
तदा कुर्वन्ति कण्ड्वादीन्दोषाः प्रकुपिता गदान्।
स विभ्रंशो मतस्तत्र स्याद्यथाव्याधि भेषजम्॥ ८२॥
पीतं स्निग्धेन सस्नेहं तद्दोषैर्मार्दवाद्धृतम्।
न वाहयति दोषांस्तु स्वस्थानात्स्तम्भयेच्च तान्॥ ८३॥
वातसङ्गगुदस्तम्भशूलैः क्षरति चाल्पशः।
तीक्ष्णं बस्तिं विरेकं वा दद्याल्लङ्घनपाचनम्॥ ८४॥
रूक्षं विरेचनं पीतं रूक्षेणाल्पबलेन वा।
मारुतं कोपयित्वाशु कुर्याद्धोरानुपद्रवान्॥ ८५॥
स्तम्भशूलानि घोराणि सर्वगात्रेषु मारुतः।
स्नेहस्वेदादिकस्तत्र कार्यो वातहरो विधिः॥ ८६॥

स्निग्धस्य गुरुकोष्ठस्य मृदूत्क्लेश्यौषधं कफम् ।
पित्तं वातं च संरुध्य सतन्द्रागौरवं क्लमम् ॥ ८७ ॥
दौर्बल्यं चाङ्गसादं च कुर्यादाशु तदुल्लिखेत् ।
लङ्घनं पाचनं चात्र स्निग्धे तीक्ष्णं च शोधनम् ॥ ८८ ॥"

तत्र श्लोकौ ।

इत्येता व्यापदः प्रोक्ताः सर्वा हि सचिकित्सिताः ।
वमनस्य विरेकस्य कृतस्याकुशलैर्नृणाम् ॥ ८९ ॥
एतान्विज्ञाय मतिमानवस्थाश्चैव तत्त्वतः ।
कुर्यात्संशोधनं सम्यगारोग्यार्थी नृणां सदा ॥ ९० ॥

इति चरकसंहितायां सिद्धिस्थाने षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

### बस्तिव्यापत्तिसिद्धिः ।

धीधैर्यौदार्यगाम्भीर्यक्षमादमतपोनिधिम् ।
पुनर्वसुं शिष्यगणः पप्रच्छ विनयान्वितः ॥ १ ॥
काः कति व्यापदो बस्तेः किं समुत्थानलक्षणाः ।
काश्चिकित्सा इति प्रश्नाञ्छ्रुत्वा तानब्रवीद्गुरुः ॥ २ ॥
"नातियोगौ क्लमाध्मातौ हिक्का हृत्प्राप्तिरूर्ध्वता ।
प्रवाहिका शिरोऽङ्गार्तिः परिकर्तः परिस्रवः ॥ ३ ॥
द्वादश व्यापदो बस्तेरसम्यग्योगसंभवाः ।
आसामेकैकशो रूपं चिकित्सां च निबोधत ॥ ४ ॥
गुरुकोष्ठेऽनिलप्राये रूक्षे वातोल्बणेऽपि वा ।
शीतोऽल्पलवणस्नेहद्रवमात्रो घनोऽपि वा ॥ ५ ॥
बस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोति गुरुकोष्ठत्वं वातमूत्रशकृद्ग्रहम् ॥ ६ ॥
नाभिबस्तिरुजं दाहं हृल्लेपं श्वयथुं गुदे ।
कण्डूगण्डानि वैवर्ण्यमरुचिं वह्निमार्दवम् ॥ ७ ॥

तत्रोष्णायाः प्रमथ्यायाः पानं स्वेदाः पृथग्विधाः।
फलवर्त्योऽथ वा कालं ज्ञात्वा शस्तं विरेचनम्॥ ८॥
बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान्।
सुरादिमूत्रवान्बस्तिः स प्राक् प्रेपितमानयेत्॥ ९॥

इत्ययोगव्यापच्चिकित्सा।

स्निग्धस्विन्नेऽतितीक्ष्णोष्णो मृदुकोष्ठेऽतियुज्यते।
तस्य लिङ्गं चिकित्सां च शोधनाभ्यां समाचरेत्॥ १०॥
पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकं बलाम्।
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावने॥ ११॥
द्राक्षायाः पक्कलोष्ट्रस्य प्रसादो मधुकस्य च।
विनीय सघृतं बस्तिं दद्याद्दाहेऽतियोगजे॥ १२॥

इत्यतियोगव्यापच्चिकित्सा।

आमदोषे निरूहेण मृदुना दोष ईरितः।
रुणद्धि मार्गं वातस्य हन्त्यग्निं मूर्च्छयत्यपि॥ १३॥
क्लमं विदाहं हृच्छूलं मोहवेष्टनगौरवम्।
कुर्यात्स्वेदैर्विरूक्षैस्तं पाचनैश्चाप्युपाचरेत्॥ १४॥
पिप्पलीकत्तृणोशीरदारुमूर्वाशृतं जलम्।
पिबेत्सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम्॥ १५॥
वचानागरसर्जैला दधिमण्डेन मूर्च्छिताः।
पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा॥ १६॥
दारु त्रिकटुकं पथ्यां पलाशं चित्रकं शटीम्।
पिष्ट्वा कुष्ठं च मूत्रेण पिबेत्क्षारांश्च दीपनान्॥ १७॥
बस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम्।
समूत्रमथवा व्यक्तलवणं मधुतैलिकम्॥ १८॥

इति क्लमव्यापच्चिकित्सा।

अल्पवीर्यो महादोषे रूक्षे क्रूराशये कृतः।
बस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात्समीरणम्॥ १९॥

स विमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम् ।
विदाहं गुरुकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ॥ २० ॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ।
फलश्यामादिभिः कुष्ठकृष्णालवणसर्षपैः ॥ २१ ॥
धूममाषवचाकिण्वक्षारचूर्णैर्गुडैः कृताम् ।
कराङ्गुष्ठनिभां वर्तिं यवमध्यां निधापयेत् ॥ २२ ॥
स्वभ्यक्तस्विन्नगात्रस्य तैलाक्तां स्नेहिते गुदे ।
अथ वा लवणागारधूमसिद्धार्थकैः कृताम् ॥ २३ ॥
बिल्वादिना निरूहः स्यात्पीलुसर्षपमूत्रवान् ।
सरलामरदारुभ्यां सिद्धं चैवानुवासनम् ॥ २४ ॥
इत्याध्मानव्यापच्चिकित्सा ।

मृदुकोष्ठेऽबले बस्तिरतितीक्ष्णोऽतिनिर्हरन् ।
कुर्याद्धिक्कादिकं तत्र हिक्काघ्नं बृंहणं च यत् ॥ २५ ॥
बलास्थिरादिकाश्मर्यत्रिफलागुडसैन्धवैः ।
सप्रसन्नारनालाम्लैस्तैलं पक्त्वानुवासयेत् ॥ २६ ॥
कृष्णालवणयोरक्षं पिबेदुष्णाम्बुना युतम् ।
धूमलेहरसक्षीरस्वेदाश्चान्नं च वातनुत् ॥ २७ ॥
इति हिक्काव्यापच्चिकित्सा ।

अतितीक्ष्णः सवातो वा न वा सम्यक् प्रपीडितः ।
घट्टयेद्धृदयं बस्तिस्तत्र कासक्षणोत्कटैः ॥ २८ ॥
स्यात्साम्ललवणस्कन्धकरीरबदरीफलैः ।
शृतैर्बस्तिर्हितः सिद्धं वातघ्नैश्चानुवासनम् ॥ २९ ॥
इति हृद्गतव्यापच्चिकित्सा ।

वातमूत्रपुरीषाणां दत्तवेगान्निगृह्णतः ।
अति वा पीडितो बस्तिर्मुखेनायाति वेगवान् ॥ ३० ॥
मूर्च्छाविकारं तस्यादौ दृष्ट्वा शीताम्बुना मुखम् ।
सिञ्चेत्पार्श्वोदरं चाधः प्रमृज्याद्वीजयेच्च तम् ॥ ३१ ॥

